लवङ्गिकया मन्दारिकाहस्तेऽद्य निक्षिप्तं तावत्। (बाढम्। तदो ताए उव्वेअविणोअणो माहवपडिच्छन्दअं अभिलिहिअं लवङ्गिआए मन्दारिआहत्थे अज्ज णिक्खित्तं दाव।)

कामन्दकी—(विचिन्त्य) सुविहितं लवङ्गिकया। माधवानुचरः कलहंसो नाम विहारदासीं मन्दारिकां कामयते। तदनेन तीर्थेन तत्प्रतिच्छन्दकमुपोद्धाताय माधवान्तिकमुपेयादित्यभिप्रायः।

अवलोकिता—माधवोऽपि कौतूहलमुत्पाद्य मया प्रवृत्तमदनमहोत्सवं मदनोद्यानं प्रभातेऽनुप्रेषितः। तत्र किल मालती गमिष्यति। ततोऽन्योन्यदर्शनं भविष्यतीति। (माहवो वि कोऊहलं उप्पादिअ मए पउत्तमअणमहूसवं मअणुज्जाणं पहादे अणुप्पेसिदो। तत्थ किल मालदी गमिस्सदि। तदो अण्णोण्णदंसणं होदित्ति)

कामन्दकी—साधु वत्से, साधु। अनेन मत्प्रियाभियोगेन स्मारयसि मम पूर्वशिष्यां सौदामिनीम्।

अवलोकिता—भगवति, सेदानीं सौदामिनी समासादिताश्चर्यमन्त्रसिद्धिप्रभावा श्रीपर्वते कापालिकव्रतं धारयति। (भअवदि, सा दाणिं सोदामिणी समासादिअअच्चरिअमन्तसिद्धिप्पहावा सिरिपव्वदे कावालिअव्वदं धारेदि)

---

मनोविनोद के लिए माधव का चित्र बनाया था, जिसे लवंगिका ने आज मन्दारिका के हाथ में दे दिया है।

कामन्दकी—(सोचकर) लवंगिका ने बहुत सुन्दर किया। माधव का कलहंस नामक अनुचर विहार (बौद्ध विहार) की दासी मन्दारिका को चाहता है। तो इस उपाय द्वारा वह चित्र (हम लोगों की) अभिलाष-सिद्धि के लिए माधव के समीप पहुंचेगा—यही (लवंगिका का) तात्पर्य है।

अवलोकिता—होनेवाले मदन-महोत्सव को (अथवा मालती को) देखने का अतीव कौतूहल उत्पन्न कर मैंने माधव को भी आज प्रातःकाल मदनोद्यान में भेजा है। मालती तो वहाँ जायगी ही तब फिर वहाँ वे एक-दूसरे को देखेंगे ही।

कामन्दकी—वाह बेटी! बहुत सुन्दर। इस प्रकार हमारे कार्य को सन्तोषजनक ढंग से पूरा करके तुमने हमारी पूर्व शिष्या सौदामिनी का स्मरण करा दिया है।

अवलोकिता—भगवति! वह सौदामिनी तो इस समय आश्चर्यजनक मंत्र-सिद्धि के प्रभाव से श्रीपर्वत में कापालिक का व्रत धारण किए हुए है।

कामन्दकी—कुतः पुनरियं वार्ता।

अवलोकिता—अस्त्यन नगर्यां महाश्मशानप्रदेशे कराला नाम चामुण्डा। (अत्थि एत्थ णअरीए महामसाणप्पदेसे कराला नाम चामुण्डा)

कामन्दकी—अस्ति। या किल विविधजीवोपहारप्रियेति साहसिकानां प्रवादः।

अवलोकिता—तस्मिन्खलु श्रीपर्वतादागतस्येतो नातिदूरश्मशानवासिनः साधकस्य मुण्डधारिणोऽघोरघण्टनामधेयस्यान्तेवासिनी महाप्रभावा कपालकुण्डला नामानुसन्ध्यमागच्छति। तत इयं प्रवृत्तिः। (तस्सिं क्खु सिरिपव्वदादो आअदस्स इदो णादिदूरमसाणवासिणो साधअस्स मुण्डधारिणो अघोरघण्टणामहेअस्स अन्तेवासिणी महाप्पहावा कवालकुण्डला णाम अणुसंझं आअच्छइ। तदो इअं पउत्ति)

कामन्दकी—सर्वं हि सौदामिन्या संभाव्यते।

अवलोकिता—अलं तावदेतेन। भगवति, सोऽपि पार्श्वचरो माधवस्य बालमित्रं मकरन्दो नन्दनस्य भगिनी मदयन्तिका यदि समुद्वहति तदपि माधवस्य द्वितीय प्रियं भवति। (अलं दाव एदिणा। भअवदि, सो वि पासअरो माहवस्स बालमित्तं मअरन्दो णन्दणस्स भइणिं मदअन्तिअं जइ समुव्वहइ तं वि माहवस्स दुइअं पिअं होदि)

कामन्दकी—नियुक्तैव तत्र मया प्रियसखी बुद्धरक्षिता।

---

कामन्दकी—यह बात तुम्हें कहाँ से ज्ञात हुई है?

अवलोकिता—इस (पद्मावती) नगरी में जो महान् श्मशान-स्थल है वहाँ कराला नाम की चामुण्डा देवी है।

कामन्दकी—हाँ है, जो कि अनेक प्रकार के प्राणियों के बलिदान को पसन्द करती है—जैसा कि (नरबलि आदि देने वाले) दुष्कर्मी लोग कहा करते हैं।

अवलोकिता—वहीं थोड़ी दूर पर अवस्थित श्मशानभूमि में कहीं पर श्रीपर्वत से आये हुए एक मुण्डमाला धारण करनेवाले अघोरघण्ट नामक साधक हैं, जिनकी महाप्रभावशालिनी कपालकुण्डला नाम की एक शिष्या है, जो प्रत्येक सन्ध्या को (वहाँ) आती है। उसी से यह खबर मिली है।

कामन्दकी—सौदामिनी से सब प्रकार की संभावनाएँ की जा सकती हैं।

अवलोकिता—इस बात को रहने दीजिए। भगवति! यदि माधव के बालसखा मकरन्द का प्रणय-सम्बन्ध नन्दन की भगिनी मदयन्तिका से हो जाता तो यह भी माधव का द्वितीय प्रियकार्य होता।

कामन्दकी—मैं इस सम्बन्ध में अपनी प्रिय सखी बुद्धरक्षिता को नियुक्त कर ही चुकी हूँ।

*अवलोकिता*—सुविहितं भगवत्या (सुविहिदं भअवदीए)

*कामन्दकी*—तदुत्तिष्ठ। माधवप्रवृत्तिमुपलभ्य मालतीमेव पश्यावः।

(इत्युत्तिष्ठतः)

कामन्दकी—(विचिन्त्य) अत्युदारप्रकृतिर्मालती नाम। निपुणं निसृष्टार्थदूतीकल्पस्तत्रावधातव्यः। सर्वथा—

शरज्ज्योत्स्ना कान्तं कुमुदमिव तं नन्दयतु सा
सुजातं कल्याणी भवतु कृतकृत्यः स च युवा।
गरीयानन्योन्यप्रगुणगुणनिर्माणनिपुणो
विधातुर्व्यापारः फलतु च मनोज्ञश्च भवतु॥१७॥

(इति निष्क्रान्ते)

मिश्रविष्कम्भः।

---

*(ततः प्रविशति गृहीतचित्रफलकोपकरणः कलहंसः)*

कलहंसः—सर्वेदानीं तुलितमकरध्वजावलेपरूपविभ्रमाक्षिप्तमालतीहृदयमाहात्म्यं नाथं माधवं पश्यामि। परिश्रान्तोऽस्मि (परिक्रम्य) यावदिहोद्याने

---

अवलोकिता—भगवती ने सुन्दर किया है।

कामन्दकी—तो उठो! माधव का समाचार जानकर मालती को ही देखें।

(ऐसा कहकर दोनों उठती है।)

कामन्दकी—(विचार कर) मालती अतीव उदार (गंभीर) स्वभाव की है, इसलिए बहुत समझ बूझकर बड़ी निपुणता से दूती का काम करना होगा। सब प्रकार से—

शरत्काल की चांदनी जिस प्रकार मनोहर कुमुद को सुप्रसन्न करती है, उसी प्रकार कल्याणी मालती सत्कुलोत्पन्न प्रियतम माधव को सब प्रकार से आनन्दित करे और वह युवा (माधव) भी मालती को प्राप्त कर कृतकृत्य बने। इस प्रकार एक दूसरे के अनुकूल गुणों का निर्माण करते हुए विधाता के व्यापार को सफलता प्राप्त हो और जो सब के लिए मनोहर हो॥१७॥

(ऐसा कहकर दोनों निकलती है।)

मिश्र विष्कम्भक समाप्त

---

(तदनन्तर उपहार के रूप में प्राप्त चित्र फलक लिए हुए कलहंस प्रवेश करता है।)

कलहंस—कामदेव के समान सौन्दर्य-गर्व एवं विभ्रम-विलास द्वारा मालती के

मुहूर्तं विश्रम्य मकरन्दसहचरं नाथं माधवं प्रेक्षिष्ये। (प्रविश्य उपविशति)। (कहिं दाणिं तुलिअअरद्धआवलेवस्स्वविब्भामाविलत्तमालदीहिअआमाहप्पं णाहं माहवं पेक्खिस्सं। परिस्सन्तो म्हि। जाव इध उज्जाणे मुहुत्तं विस्समिअ मअरन्दसहअरं णाहं माहवं पेक्खिस्स)

(ततः प्रविशति मकरन्दः)

मकरन्दः—कथितमवलोकितया मदनोद्यानं गतो माधव इति। भवतु। गच्छामि। (परिक्रम्यावलोक्य च) दिष्ट्या वयस्य इत एवाभिवर्तते। (निरूप्य) अस्य तु—

गमनमलसं शून्या दृष्टिः शरीरमसौष्ठवं
श्वसितमधिकं किं न्वेतत्स्यात्किमन्यदतोऽथवा।
भ्रमति भुवने कन्दर्पाज्ञा विकारि च यौवनं
ललितमधुरास्ते ते भावाः क्षिपन्ति च धीरताम्॥१८॥

(ततः प्रविशति यथानिर्दिष्टरूपो माधवः)

माधवः (स्वगतम्)—
तामिन्दुसुन्दरमुखीं सुचिरं विभाव्य
चेतः कथंकथमपि व्यपवर्तते मे।

---

हृदय की गंभीरता को दूर करनेवाले अपने स्वामी माधव को मैं कहाँ देख सकूंगा। बहुत थक गया हूँ। (चारों ओर घूम कर) तब तक इस उद्यान में कुछ समय तक विश्राम कर मकरन्द के साथ अपने स्वामी माधव को देखूंगा। (प्रवेश करके बैठता है।)

(तदनन्तर मकरन्द प्रवेश करता है।)

मकरन्द—अवलोकिता ने कहा है कि माधव मदनोद्यान में गये हैं। जो हाँ, जाता हूं। (कुछ दूर जा कर फिर देखकर) सौभाग्य से हमारे मित्र तो इधर ही चले आ रहे हैं। (देखकर) इनका तो—

हमारे मित्र का गमन आलस्ययुक्त है, दृष्टि सूनी-सूनी-सी है, शरीर सुन्दर नहीं दिखायी पड़ रहा है, श्वास की गति तेज चल रही है—यह सब क्या है? अथवा इसके अतिरिक्त और होगा ही क्या? समस्त संसार में कामदेव की आज्ञा विचरण कर रही है। युवावस्था तो विकार युक्त होती ही है। सुन्दर और प्रिय वे वे (चन्द्रमा और चन्दनादि) पदार्थ धैर्य को दूर किए दे रहे हैं॥१७॥

(तदनन्तर निर्देश के अनुसार रूप धारण किये हुए माधव प्रवेश करता है।)

माधव—(अपने आप) चन्द्रमा के समान मनोहर मुख वाली (मालती) का बहुत समय तक चिन्ता करके मेरा चित्त मन्द विवेक युक्त होकर, लज्जा को जीत-

लज्जां विजित्य विनयं विनिवार्य धैर्य-
मुन्मथ्य मन्थरविवेकमकाण्ड एव ॥१९॥

आश्चर्यम्।

यद्विस्मयस्तिमितमस्तमितान्यभाव-
मानन्दमन्दममृतप्लवनादिवासीत्।
तत्सन्निधौ तदधुना हृदयं मदीय-
मङ्गारचुम्बितमिव व्यथमानमास्ते ॥२०॥

मकरन्दः—(उपसृत्य) सखे माधव! इत इतो ललाटन्तपस्तपति घर्मांशुः। तदस्मिन्नुद्याने मुहूर्तमुपविशावः। (उभौ परिक्रामतः)

कलहंसः—कथं मकरन्दसहचर इदमेव बालोद्यानमलङ्करोति माधवः। तद्दर्शयामि मदनवेदनाखिद्यमानमालतीलोचनसुखावहमात्मनोऽस्य प्रतिच्छन्दकम्। अथवा विश्रामसौख्यं तावदनुभवतु। (कहं मअरन्दसहअरो इमं एव्व बालुज्जाणं अलंकरेदि माहवो। ता दंसेमि मअणवेअणाखिज्जमाणमालदीलोअणसुहावहं अत्तणो से पडिच्छन्दअं। अहवा विस्सामसोक्खं दाव अणुहोदु)

---

कर शिक्षा के बन्धनरूप विनय को छिन्न-भिन्न करके एवं धैर्य को नष्ट करके अतीव कष्ट सहन करके किसी न किसी प्रकार से वापस लौट आया है ॥१९॥

आश्चर्य है—हमारा जो हृदय मालती के समीप विस्मय के कारण निश्चल था, अन्य पदार्थों के सम्बन्ध में भावना शून्य था एवं अमृत में डूबे हुए की भांति अमन्द आनन्द से स्तब्ध के समान था, वही (हृदय) इस समय (प्रिया के समीप में न रहने से) जलते हुए अंगार से स्पर्श किए हुए की भांति पीडा युक्त हो रहा है ॥२०॥

मकरन्द—(निकट आकर) मित्र माधव! इधर तो आ जाओ, इधर। ललाट को तपानेवाले सूर्यनारायण अतीव प्रखर हो रहे हैं। तो इस उद्यान में थोड़ी देर के लिए हम दोनों बैठ जायें।

(दोनों इधर उधर घूमते हैं।)

कलहंस—मकरन्द के साथ माधव क्यों इसी बालोद्यान को सुशोभित कर रहा है। तो काम-पीडा से खिन्न मालती के नेत्रों को सुख देने वाले इनके अपने चित्र को मैं दिखलाता हूं। अथवा कुछ क्षणों तक यह विश्राम का सुख अनुभव करें।

मकरन्दः—तदस्यैव तावदुच्छ्वसितकुसुमकेसरकषायशीतलामोदवासितोद्यानस्य काञ्चनपादस्याधस्तादुपविशावः।

(उभौ तथा कुरुतः)

मकरन्दः—वयस्य माधव! सकलनगराङ्गनाप्रवर्तितमहोत्सवाभिरामकामदेवोद्यानयात्राप्रतिनिवृत्तमन्यादृशमिव भवन्तमवधारयामि। अपि त्वमवतीर्णोऽसि रतिरमणबाणगोचरताम्।

(माधवः सलज्जमधोमुखस्तिष्ठति)

मकरन्दः—(विहस्य) किमवनम्रमुग्धमुखपुण्डरीकः स्थितोऽसि। पश्य

अन्येषु जन्तुषु च भूयस्तमसावृतेषु
विश्वस्य धातरि समः परमेश्वरेऽपि।
सोऽयंप्रसिद्धविभवः खलुचित्तजन्मा
मा लज्जया तव कथंचिदपह्नुतिं भूत् ॥२१॥

माधवः—वयस्य, किं न कथयामि। श्रूयताम्। गतोऽहमवलोकिताजनितकौतुकः कामदेवायतनम्। इतस्ततः परिक्रम्य परिश्रमादुल्लसितमधुरमदिरामोदपरिमलाकृष्टसकलमिलदलिपटलसंकुलाकुलितमुकुलावलीमनोहराभरणस्य—

---

मकरन्द—तो तब तक उस विकसित चम्पा के वृक्ष के नीचे हम दोनों बैठें, जो खिले हुए पुष्पों के मकरन्द से निकलती हुई कसैली (खुशबूदार) किन्तु शीतल सुगन्ध से यह (सारा का सारा) उद्यान आमोदित हो रहा है।

(दोनों वैसा ही करते हैं।)

मकरन्द—मित्र माधव! समस्त पुरवासिनी सुन्दरियों द्वारा सम्पन्न महोत्सव से अतीव मनोहर उक्त मदनोद्यान की यात्रा से लौटे हुए आप को मैं किसी दूसरी ही अवस्था में पा रहा हूं। क्या आप भी काम-बाण के लक्ष्य बन गये हैं?

(माधव लज्जित होकर नीचे मुख किए हुए बैठता है।)

मकरन्द—(हँसकर) तो क्यों तुम (इस प्रकार) मनोहर मुख-कमल को नीचे किए हुए बैठे हो? देखो तो—

जो मनोभव कामदेव (रजोगुण एवं) तमोगुण से आवृत्त प्राणियों में, और सम्पूर्ण जगत के सृष्टिकर्त्ता ब्रह्मा एवं परमेश्वर तक में भी समान रूप से (विद्यमान) रहता है, उसका ऐश्वर्य एवं पराक्रम सर्वप्रसिद्ध है। अत: इस प्रकार लज्जायुक्त होकर तुम्हें अपनी मनोदशा को छिपाने का प्रयास नहीं करना चाहिए ॥२१॥

माधव—मित्र! भला मैं (तुमसे) क्यों नहीं कहूँगा? सुनो। अवलोकिता द्वारा उत्कण्ठित होकर मैं कामदेव के उस उद्यान में चला गया था। वहाँ इधर

रमणीयाङ्गणभुवो बालबकुलस्यालवालपरिसरे स्थितः। तस्य च यदृच्छया निरन्तरनिपतितानि विकसितानि कुसुमान्यादाय विदग्धरचनामनोहरां स्रजमभिनिर्मातुमारब्धवान्। अनन्तरं च देवस्य सञ्चारिणी मकरकेतनस्य जगद्विजयवैजयन्तिका निर्गत्य गर्भभवनादुज्ज्वलविदग्धमुग्धबालनेपथ्यविरचनाविर्भावितकुमारीभावा महानुभावप्रकृतिरत्युदारपरिजना कापि तत एवागतवती।

सा रामणीयकनिधेरधिदेवता वा
सौन्दर्यसारसमुदायनिकेतनं वा।
तस्याः सखे नियतमिन्दुकलामृणाल-
ज्योत्स्नादि कारणमभून्मदनश्च वेधाः॥२२॥

अथ प्रणयिनीभिरनुचरीभिः कुसुमसंचयावचयलीलाभिलाषवतीभिरभ्यर्थ्यमाना तमेव बकुलपादपोद्देशमागतवती। तस्याश्च कस्मिंश्चिदपि महाभाग-

---

इधर घूमने से परिश्रान्त होकर मैं उसी रमणीय उपवन भूमि में उत्पन्न एक ऐसे मौलसिरी वृक्ष के थाल्हे के समीप सुस्ताने के लिए बैठ गया था, जिसके मदहोश करनेवाली मदिरा के समान फैलती हुई पुष्पों की सुगन्ध चारों दिशाओं में फैल रही थी, और जिससे आकृष्ट होकर असंख्य भ्रमरगण उस मौलसिरी के पुष्पस्तवकों के ऊपर मंडरा रहे थे। वे पुष्पस्तवक उस वृक्ष के मनोहर आभूषण की भाँति उसकी शोभा बहुत बढ़ा रहे थे। वहाँ उस वृक्ष के नीचे अपने आप निरन्तर गिरते हुए पुष्पों को चुनकर मैंने एक माला बनाना आरम्भ कर दिया, जो मेरी कला-निपुणता से गूंथने के कारण बहुत ही मनोहर लग रही थी। तदनन्तर (मैंने देखा कि वहाँ) भगवान् मकरध्वज की विश्वविजयिनी जीती-जागती पताका के समान कोई सुन्दरी मन्दिर से बाहर निकलकर उसी ओर आने लगी, जो श्वेत-शुभ्र मनोहर बालिका के लिए उचित वेश-भूषा बड़ी निपुणता से धारण किए हुए थी, जिससे उसका कौमार्य प्रकट हो रहा था। उसका अत्यन्त धीर-गंभीर स्वभाव परिलक्षित हो रहा था और उदार स्वभाव की परिचारिकाएं उसके साथ थीं।

वह (सुन्दरी) सुन्दरता के आकर की अधिष्ठात्री देवी थी अथवा इस संसार में जो कुछ भी उत्कृष्ट सौन्दर्य है, उसके समुदाय का एक मात्र आधार थी। मित्र! निश्चय ही चन्द्रमा अमृत, कमलनाल एवं चन्द्रिका उस (सुन्दरी) के उपादान कारण हैं और उसके निर्माता (स्वयं) कामदेव रहे हैं॥२२॥

तदनन्तर स्नेह करनेवाली अनुचरियों द्वारा, जो पुष्पों का चयन करने की क्रीडा के लिए अधीर उत्सुक थीं, प्रार्थना किए जाने पर वह सुन्दरी उसी मौलसिरी

धेयजन्मनि बहुदिवसोपचीयमानमिव मन्मथव्यथाविकारमुपलक्षितवानस्मि । यतः—

परिमृदितमृणालीम्लानमङ्गं प्रवृत्तिः
कथमपि परिवारप्रार्थनाभिः क्रियासु ।
कलयति च हिमांशोर्निष्कलङ्कस्य लक्ष्मी-
मभिनवकरिदन्तच्छेदकान्तः कपोलः ॥२३॥

सा मम दर्शनात्प्रभृत्यमृतवर्तिरिव चक्षुषोनिरतिशयमानन्दमुत्पादयन्त्य-यस्कान्तमणिशलाकेव लोहधातुमन्तःकरणमुपसंहृतवती । किं बहुना ।

सन्तापसन्ततिमहाव्यसनाय तस्या-
मासक्तमेतदनपेक्षितहेतु चेतः ।
प्रायः शुभं च विदधात्यशुभं च जन्तोः
सर्वङ्कषा भगवती भवितव्यतैव ॥२४॥

मकरन्दः—स्नेहश्च निमित्तसव्यपेक्षश्चेति विप्रतिषिद्धमेतत् । पश्य—

---

के वृक्ष की ओर आ गयी। उसे मैंने देखा कि वह किसी महाभाग्यशाली (पुरुष) के लिए चिरकाल से कामदेव की यातना सहन कर रही है। क्योंकि—

(उसके) हाथ आदि अंग मर्दित मृणाल की भांति मलिन हो गये हैं। परिजनों के अनुरोध पर ही वह किसी प्रकार कार्यों में प्रवृत्त होती है। और नये-नये काटे गये हाथी दांत के खण्ड की भांति पीले वर्ण का उसका कपोल कलंकविहीन चन्द्रमा की सुन्दरता को धारण करता है॥२३॥

सो इस प्रकार मेरे दर्शन करने के समय से ही वह अमृत की शलाका की भांति दोनों नेत्रों में अतिशय आनन्द उत्पन्न करती हुई जैसे चुम्बक मणि लौह धातु को अपनी ओर खींचती है वैसे ही मेरे अन्तःकरण को खींच रही है। अधिक क्या कहूं?

मेरा यह चित्त अनवरत विरह के सन्ताप रूपी बड़ी विपत्ति के लिए किसी कारण के बिना ही उस सुन्दरी में आसक्त हो गया है। सब को पीड़ित करनेवाली भगवती (नियति) ही प्रायः प्राणियों के शुभ एवं अशुभ का विधान करती रहती है॥२४॥

मकरन्द—स्नेह किसी कारण की अपेक्षा करता है—यह तो उल्टी बात है।

व्यतिषजति पदार्थानान्तरः कोऽपि हेतु-
र्न खलु बहिरुपाधीन्प्रीतयः संश्रयन्ते।
विकसति हि पतङ्गस्योदये पुण्डरीकं
द्रवति च हिमरश्मावुद्गते चन्द्रकान्तः॥२५॥

ततस्ततः।

माधवः—ततश्च तत्र—

सभ्रूविलासमय सोऽयमितीव नाम
सप्रत्यभिज्ञमिव मामवलोक्य तस्याः।
अन्योन्यमेव चतुरेण सखीजनेन
मुक्तास्तदा स्मितसुधामधुराः कटाक्षाः॥२६॥

मकरन्दः—(स्वगतम्) कथं प्रत्यभिज्ञापि नाम।

माधवः—अथ ताः सलीलमुत्तालकरकमलतालिकातरलवलयावलीकमुत्सृत कलहंसविभ्रमाभिरामचरणसञ्चरणरणरणायमानमञ्जुमञ्जीररणितानुविद्धमेखला-

देखो—अभ्यन्तर में विद्यमान कोई अनिर्वचनीय कारण पदार्थों को एक-दूसरे से मिलाता है। स्नेह किन्हीं बाहरी कारणों की अपेक्षा नहीं रखता। क्योंकि सूर्य के उदित होने पर कमल खिलता है और चन्द्रमा के उदित होने पर चन्द्रकान्त मणि जलस्राव करने लगती है॥२५॥

(हाँ तो) उसके बाद (क्या हुआ) ? उसके बाद।

माधव—उसके बाद तो वहाँ,

उसकी चतुर सखी ने मुझे देखने के अनन्तर हम दोनों के परस्पर के भावों को भली भांति समझकर—यह वही हैं—इस प्रकार की प्रत्यभिज्ञा से अपने मन्दहास्य से युक्त मधुर कटाक्षों को छोड़ा॥२६॥

मकरन्द—(अपने आप) तो क्या प्रत्यभिज्ञा (पहचान) भी हो गयी ?

माधव—इसके बाद तो वे सखियाँ क्रीडा करतीहुई वापस लौटकर—स्वामी की बेटी ! सौभाग्य से हमारी उन्नति हो रही है जो कि यहीं पर किसी व्यक्ति का कोई प्रियतम बैठा हुआ है—इस प्रकार की बातें अपनी अंगुलियों के संकेत से मुझे दिखाते हुए कहने लगी। वे सखियाँ उस समय अपने कर-कमलों से तालियाँ बजाते हुए अपने मनोहर-चंचल कंकणों को झनकार रही थीं। भयभीत कलहंस के समान मनोहर मन्दगति का अनुकरण करती हुई अपने चरणों के संचरण के समय

कलापकिङ्किणीरणरणत्कारमुखरं प्रतिनिवृत्य 'भर्तृदारिके। दिष्ट्या वर्धामहे। यदत्रैव कोऽपि कस्या अपि वल्लभस्तिष्ठति' इति मामङ्गुलीदलविलासेनाख्यातवत्यः।

मकरन्दः—हन्त, महतः प्रथमानुरागस्योद्भेदः।

कलहंसः—अनयोः सरसरमणीयानुबन्धिनी खलु स्त्रीकथा। (एदाणं सरसरमणिज्जाणुबन्धिणी खु इत्थिआकहा)

मकरन्दः—ततस्ततः।

माधवः—

> अत्रान्तरे किमपि वाग्विभयातिवृत्त-
> वैचित्र्यमुल्लसितविभ्रममायताक्ष्याः।
> मुद्रू रिसात्त्विकविकारमपास्तधैर्य-
> माचार्यकं विजयि मान्मथमाविरासीत्॥२७॥

ततश्च—

> स्तिमितविकसितानामुल्लसद्भ्रूलतानां
> मसृणमुकुलितानां प्रान्तविस्तारभाजाम्।

---

झन-झन शब्द करनेवाले नूपुर के मनोहर शब्दों के साथ करधनी लगे किंकिणी के शब्दों को प्रतिध्वनित कर रही थी।

मकरन्द—(अपने आप) हाँ, तो ऐसा लगता है कि यह अनुराग बहुत पहले से था और यह प्रकाश में आया है।

कलहंस—(सुनकर) यह तो स्त्री सम्बन्धी कोई बातचीत चल रही है, जो बड़ी सरस एवं मनोहर कथनोपकथन से युक्त है।

मकरन्द—तब उसके बाद। उसके बाद।

माधव—इस अवसर पर उस दीर्घनयना सुन्दरी की ऐसी अनिर्वचनीय एवं (सब को) जीतनेवाली कामदेव प्रदत्त विविध प्रकार की शृंगारचेष्टाएँ उपदेशक के रूप में प्रकट हुईं। जिनकी विचित्रता वाणी की शक्ति से परे है। उनके कारण विविध प्रकार के हाव-भाव प्रकट होने लगे, एवं (स्तम्भ स्वेद आदि) प्रचुर सात्त्विक विकार उपस्थित हो गये; जिनसे हमारा धैर्य भी छिन्न-भिन्न हो गया॥२७॥

तदनन्तर, उस सुन्दरी के दोनों नेत्र (हमारी ओर) (किसी क्षण) निश्चल (किसी क्षण) सुप्रसन्न, (किसी क्षण) ऊपर उठनेवाली भौंहों से युक्त, (किसी क्षण) अपाय भाव में विस्तार से युक्त (किसी क्षण) कोमल भाव से अधमुंदे

प्रतिनयननिपाते किञ्चिदाकुञ्चितानां
विविधमहमभूवं पात्रमालोकितानाम् ॥२८॥

ततश्च—

अलसवलितमुग्धस्निग्धनिष्पन्दमन्दै-
रधिकविकसदन्तर्विस्मयस्मेरतारैः ।
हृदयमशरणं मे पक्ष्मलाक्ष्याः कटाक्षै-
रपहृतमपविद्धं पीतमुन्मूलितं च ॥२९॥

अहं तु तस्याः सर्वाकारहृदयङ्गमायाः संभाव्यमानस्नेहरसेन सन्निधिना विधेयीकृतोऽपि पारिप्लवस्वभावमनो निह्नोतुकामः प्रागप्रस्तुतस्य बकुलपुष्पदाम्नो यथाकथञ्चिदवशेषं ग्रथितवानेव। ततो मिलितवेत्रपाणिवर्षवरप्रायपुरुषपरिवारा गजवधूमारुह्य नगरगामिनं मार्गमिन्दुवदनालङ्कृतवती।

यान्त्या मुहुर्वलितकन्धरमाननं त-
दावृत्तवृन्तशतपत्रनिभं वहन्त्या।

---

(मुकलित) एवं किसी क्षण मेरे नेत्रों के समागम होने पर लज्जा से संकुचित होने लगे और इस प्रकार मैं उसके अवलोकनों का विविध प्रकार का पात्र (आश्रय) बन गया ॥२८॥

उसके अनन्तर—लज्जा के कारण व्यापार-विरत, पुनः देखने की अभिलाषा से तिरछे, मनोहर स्नेहभरे, लक्ष्य के अतिरिक्त कहीं अन्यत्र न जाने वाले, मन्द एवं अतिशय विस्तार को प्राप्त, अन्तःकरण में स्थित आश्चर्य से फड़कती हुई ताराओं से युक्त उस दीर्घ भौंहों वाली सुन्दरी के (मनोहर) कटाक्षों ने मेरे शरण-विहीन हृदय को अपहृत कर लिया। उस पर (क्रूर) आघात किया, उसको पी लिया और उसे निर्मूल बना दिया ॥२९॥

मैं तो सब प्रकार से मनोहर उस सुन्दरी के स्नेह-रस की सूचना देनेवाले सान्निध्य को प्राप्त करने की संभावना से एक बार वशीभूत होकर भी, अपनी चचलता को छिपाने की इच्छा से पहले ही आरम्भ की गयी उस बकुल-पुष्पों की माला के बचे हुए भाग को किसी प्रकार से गूथने में ही लगा रहा। तदनन्तर वहाँ पर एकत्र हाथों में बेत की छडी लिये हुए सैकडों कंचुकियों (नपुंसकों) एवं अन्यान्य सेवक-परिजनों के साथ उस चन्द्रमुखी ने हथिनी पर चढ़कर नगर को जानेवाले राजमार्ग को अलंकृत किया!

उस समय बार बार अपनी ग्रीवा को परिवर्तित करते हुए उस सुन्दरी ने वायु द्वारा इधर-उधर हिलाते हुए वृन्तवाले कमल के समान मनोहर मुख को धारण

दिग्धोऽमृतेन च विषेण च पक्ष्मलाक्ष्या
गाढं निखात इव मे हृदये कटाक्षः ॥३०॥

ततः प्रभृति—

परिच्छेदातीतः सकलवचनानामविषयः
पुनर्जन्मन्यस्मिन्ननुभवपथं यो न गतवान्।
विवेकप्रध्वंसादुपचितमहामोहगहनो
विकारः कोऽप्यन्तर्जडयति च तापंच तनुते ॥३१॥

अपि च—

परिच्छेदव्यक्तिर्न भवति पुरःस्थेऽपि विषये
भवत्यभ्यस्तेऽपि स्मरणमतथाभावविरसम्।
न सन्तापच्छेदो हिमसरसि वा चन्द्रमसि वा
मनो निष्ठाशून्यं भ्रमति च किमप्यालिखति च ॥३२॥

कलहंसः—दृढं खल्वेष कयाप्यपहृतः। अपि नाम मालत्येव सा भवेत्।
**(दिढं क्खु एसो कए वि अज्ज अवहरिदो। अवि णाम मालदी एव्व सा हुवे)**

---

करते हुए अपनी सघन भौंहो से युक्त नेत्रों द्वारा अपने अमृत और विष मे बुझे हुए कटाक्षों को मेरे हृदय मे गहराई तक गड़ा जैसा दिया ॥३०॥

तब से लेकर, ऐसा कोई विकार मेरे अन्तःकरण को जड बना रहा है तथा सन्ताप को बढ़ा रहा है, जो निश्चयात्मक ज्ञान को नष्ट करनेवाला है, सभी प्रकार की वाणियों से प्रकट नही किया जा सकता, पुनर्जन्म में और इस जन्म मे भी जिसका अनुभव कभी नही किया गया है, और जो विवेक के विनष्ट होने से बढ़े हुए महामोह से अतीव भयंकर हो गया है ॥३१॥

और भी, (उस विकार के कारण) सामने स्थित वस्तु या विषय में भी निश्चय नहीं कर पाता, बारम्बार के अभ्यस्त पदार्थों में भी दूसरे रूप से अशान्तिदायी स्मरण होता है। अति शीतल सरोवर मे अथवा चन्द्रमा (किरणों से) से भी सन्ताप की निवृत्ति नहीं हो रही है एवं अधीरमन सदैव घूमता-सा रहता है और किसी अनिर्वचनीय पदार्थ का आश्रय लेता है ॥३२॥

कलहंस—किसी सुन्दरी ने इन्हें अत्यन्त दृढ़ता से (अपनी ओर) आकृष्ट कर लिया है। ऐसी मालती ही हो सकती है।

मकरन्दः—(स्वगतम्) अहो अभिषङ्गः। तत्किं निषेधयामि प्रियसुहृदम्। अथवा—

मा मूमुहत्खलु भवन्तमनन्यजन्मा
मा ते मलीमसविकारघना मतिर्भूत्।
इत्यादि नन्विह निरर्थकमेव यस्मिन्-
कामश्च जृम्भितगुणो नवयौवनं च॥३३॥

(प्रकाशम्) वयस्य, अपि विदिते तदन्वयनामनी।

माधवः—श्रूयताम्। अथ तस्याः करेणुकाधिरोहणसमय एव ततः सखीकदम्बकादन्यतमा वारयोषिद्विलम्ब्य कुसुमापचयक्रमेण नेदीयसी भूत्वा प्रणम्य कुसुमापीडव्याजेन मामेवमुक्तवती—'महाभाग! सुश्लिष्टगुणतया रमणीय एव सन्निवेशः। कुतूहलिनी च नो भर्तृदारिकास्मिन्वर्तते। तस्यामभिनवो विचित्रः

---

मकरन्द—(अपने आप) अतीव अद्भुत आसक्ति देखी जा रही है। तो क्या अपने प्रिय मित्र को रोकूं। अथवा,

कामदेव तुमको मोहित न कर सके और तुम्हारी मति मलिन विकारों से आच्छन्न न हो—इस प्रकार की उपदेश भरी बातें इनके लिए निरर्थक हैं, क्योंकि इन पर कामदेव ने अपने प्रभाव का विस्तार कर लिया है। नवयौवन की अवस्था तो है ही॥३३॥

(प्रकट रूप में) मित्र! क्या तुम्हें उसके वंश और नाम की जानकारी है।

माधव—सुनो! उसके बाद उस सुन्दरी के हथिनी पर सवार होते समय ही, उसके विशाल सखी-समूह में से ही (निकलकर) एक वारांगना विलंब करके फूल तोड़ते-तोड़ते मेरे समीप में आकर और पुष्पों की माला को सिर में यथास्थान धारण करने के बहाने से मुझे प्रणाम कर मुझसे इस प्रकार बोली—महाभाग्यशालिन्! धागे से सुन्दर रूप में गूंथी हुई यह आपकी माला अतीव मनोहारिणी है। इसकी रचना में हमारे स्वामी की कन्या को बडी उत्कण्ठा है, क्योंकि इस प्रकार की पुष्पमाला की रचना में नूतन और विचित्र ढंग अपनाया गया है, (अथवा उनमें आपके प्रति अतीव आसक्ति के कारण कामदेव का व्यापार नूतन और विचित्र हो उठा है।) तो माला-रचना में आपकी जो इस प्रकार की प्रवीणता (अथवा सम्पूर्ण कलाओं के ज्ञान की प्रवीणता) है, वह कृतार्थ हो और रचना की रमणीयता (रचनाचातुरी) भी सफल हो। यह (नूतनपुष्पों से रचित) सरस माला

कुसुमेषुव्यापारः। तद्भवतु कृतार्थता वैदग्ध्यस्य। फलतु निर्माणरमणीयता। समासादयतु सरस एष भर्तृदारिकायाः कण्ठावलम्बनमहार्घताम्' इति।

मकरन्दः—अहो वैदग्ध्यम्।

माधवः—तया मदनुयुक्तयाख्यातम्—'इयममात्यभूरिवसोः प्रसूतिर्मालती नाम। अहं च भर्तृदारिकायाः प्रसादभूमिर्धात्रेयिका लवङ्गिका नाम' इति।

कलहंसः—(सहर्षम्) किं नाम मालतीति। दिष्ट्या विलसितं भगवता देवेन कुसुमायुधेन। जितमस्माभिः। (किं णाम मालदित्ति। दिट्ठिआ विलसिदं भअवदा देवेण कुसुमाउहेण। जिदं अम्हेहिं)

मकरन्दः—(स्वगतम्) अमात्यभूरिवसोरात्मजेत्यपर्याप्तिर्बहुमानस्य। अपि च। मालती मालतीति मोदते भगवती कामन्दकी। तां च राजा नन्दनाय याचत इति किंवदन्ती श्रूयते। (प्रकाशम्)

माधवः—तथा चानुबध्यमानस्तां बकुलमालामात्मनः कण्ठादवतार्य दत्तवान्। असौ पुनरभिनिविष्टया दृशा मालतीमुखावलोकनविहस्ततया विषमर-

---

हमारे स्वामी की कन्या के कण्ठ में विभूषित होकर महान् (अत्यधिक) मूल्य प्राप्त करे।

मकरन्द—अद्भुत चातुरी है।

माधव—मेरे पूछने पर उस (वारांगना) ने बतलाया—यह अमात्य भूरिवसु की कन्या है। इसका नाम मालती है। मैं स्वामी की कन्या की विश्वासपात्र, उसकी धाय की कन्या हूँ और मेरा नाम लवंगिका है।

कलहंस—(हर्ष के साथ) क्या 'मालती' यह नाम है। सौभाग्य की बात है कि भगवान कामदेव ने (दोनों पर समान रूप से) प्रभाव विस्तार किया है। निश्चय ही हम लोगों की विजय है।

मकरन्द—(अपने आप) अमात्य भूरिवसु की कन्या है—इतने से ही आदर की परिसीमा नहीं है। और भी (कारण) है। भगवती कामन्दकी मालती-मालती—ऐसा कहकर प्रसन्न होती हैं। राजा उसे नन्दन के लिए माग रहे हैं—यह भी किंवदन्ती सुनी जा रही है। (प्रकटरूप में) हाँ, तब इसके बाद (क्या हुआ ?)।

माधव—उसके इस प्रकार अनुरोध करने पर मैंने उस बकुल-पुष्पों की माला को अपने कण्ठ से उतारकर उसे दे दिया। उस (लवंगिका) ने भी तात्पर्य भरे नेत्रों से, मेरे मालती के मुख की ओर देखने के कारण व्यग्रचित्त होने से, पूर्व भाग की अपेक्षा पर भाग की रचना के विपरीत हो जाने पर भी उसी माला को अत्यधिक

धि[illegible]भागामपि तामेव मुहुर्मुहुर्बहुमन्यमाना 'महानयं प्रसाद' इति प्रतिगृहीतवती। अनन्तरं च यात्राभङ्गप्रचलितस्य महतः पौरनिगमजनस्य सम्मर्देन तिरोहितायां तस्यामागतोऽस्मि।

मकरन्दः—वयस्य, मालत्या अपि स्नेहदर्शनात्सुश्लिष्टमेतत्। यो हि कपोलपाण्डुतादिचिह्नैः सूचितः प्रागनुरागस्तस्याः कामाभिषङ्गः सोऽपि त्वन्निबन्धन इति व्यक्तमेतत्। एतत्तु न ज्ञायते क्व दृष्टपूर्वस्तया वयस्य इति। न खलु तादृश्यो महाभागधेयजन्मानोऽन्यासक्तचेतसो भूत्वा परत्र चक्षूरागिण्यो भवन्ति।
अपि च—

अन्योन्यसंभिन्नदृशां सखीनां
तस्यास्त्वयि प्रागनुरागचिह्नम्।
कस्यापि कोऽपीति निवेदितं च

माधवः—किं चान्यत्।
मकरन्दः—

धात्रेयिकायाश्चतुरं वचश्च॥३४॥

---

मान देती हुई—यह आपका महान् अनुग्रह है—ऐसा कहकर ले लिया। उसके बाद उत्सव की समाप्ति हो जाने पर असंख्य पुरवासी लोगों की बड़ी भीड़ के चल पड़ने के कारण मालती जब तिरोहित (मेरी आंखों से ओझल) हो गयी तो मैं (यहां) चला आया हूँ।

मकरन्द—मित्र ! मालती का भी स्नेह देखा गया है—इससे यह घटना अच्छी हुई है। (मालती के) कपोल में जो पाण्डुता आदि के चिह्न दिखायी देते हैं, वह उसके पूर्वानुराग की सूचना है और उससे उसके काम-विकार की प्रवृत्ता ज्ञात होती है। उसके भी कारण आप ही हैं—यह सुस्पष्ट है। किन्तु यह नहीं ज्ञात हुआ कि मित्र ! (आप) को उसने पहले कहां देखा था ? उनके समान महान भाग्यशालिनी कुमारियाँ किसी पुरुष में आसक्त चित्त होकर किसी अन्य पुरुष में नेत्रानुराग दरसाने वाली नहीं होती हैं।

और भी,

सखियों ने एक दूसरे की ओर देखते हुए जो यह बात कही थी कि—इस स्थान पर किसी का कोई प्रियतम बैठा हुआ है—उससे भी आप में उसके (मालती के) पूर्वानुराग का चिह्न मालूम पड़ता है।

माधव—और क्यों ?

मकरन्द—और धाय की पुत्री लवंगिका का श्लेषगर्भित वचन भी तो यही सूचित करता है (कि आपमें मालती का पूर्वानुराग है)॥३४॥

कलहंसः—(उपसृत्य) एतच्च। (एवं अ) (चित्रं दर्शयति)।

(उभौ पश्यतः)

मकरन्दः—कलहंसक, केनेदं माधवस्य रूपमभिलिखितम्।

कलहंसः—येनैवास्य हृदयमपहृतम्। (जेण एव्व से हिअअं अवहरिदं)

मकरन्दः—अपि नाम मालत्या।

कलहंसः—अथ किम्। (अह इं)

माधवः—वयस्य मकरन्द! प्रसन्नप्रायस्ते तर्कः।

मकरन्दः—कुतोऽस्याधिगमस्ते।

कलहंसः—मम तावन्मन्दारिकाहस्तात्। तया अपि लवङ्गिकासकाशात्। (मह दाव मन्दारिआहत्थादो। तए वि लवंगिआसआसादो)

मकरन्दः—कथय किमाह मन्दारिका माधवालेख्यप्रयोजनं मालत्याः।

कलहंसः—उत्कण्ठाविनोदनमिति। (उक्कण्ठाविणोअणं त्ति)

मकरन्दः—वयस्य, समाश्वसिहि।

या कौमुदी नयनयोर्भवतः सुजन्मा
तस्या भवानपि मनोरथबन्धबन्धुः।

---

कलहंस—(समीप आकर) यह भी।

(चित्र दिखलाता है।)

(दोनों देखते हैं।)

मकरन्द—कलहंस! किसने माधव के इस (सुन्दर) रूप (चित्र) का आलेखन किया है।

कलहंस—जिसने इनके चित्त को चुरा लिया है।

मकरन्द—क्या मालती ने।

कलहंस—और क्या (किसी दूसरे ने)?

माधव—मित्र मकरन्द! तुम्हारा तर्क (अनुमानतः) प्रायः ठीक हो रहा है।

मकरन्द—तुमने इसे कहाँ से प्राप्त किया?

कलहंस—मुझे तो यह मन्दारिका के हाथ से मिला। उसे भी लवंगिका से मिला था।

मकरन्द—माधव का चित्र बनाने में मालती का क्या प्रयोजन मन्दारिका ने बतलाया था।

कलहंस—केवल उत्कण्ठा की निवृत्ति (यही बतलाया था)।

मकरन्द—मित्र! आश्वस्त हों। जो आप के दोनों नेत्रों की चन्द्रिका है, सत्कुलोत्पन्न आप भी उसके चित्त की अत्यासक्ति के आश्रय (प्राणवल्लभ) हैं।

तत्संगमं प्रति सखे! न हि संशयोऽस्ति
यस्मिन्विधिश्च मदनश्च कृताभियोगः॥३५॥

इष्टव्यरूपा च भवतो विकारहेतुरुन्मदयैवालिख्यताम्।

माधवः—यदभिरुचितं वयस्याय। (लिखन्) सखे मकरन्द!

वारंवारं तिरयति दृशावुद्गतो बाष्पपूर-
स्तत्संकल्पोपहितजडिम स्तम्भमभ्येति गात्रम्।
सद्यः स्विद्यन्नयमविरतोत्कम्पलोलाङ्गुलीकः
पाणिर्लेखाविधिषु नितरां वर्तते किं करोमि॥३६॥

तथाप्यवहितोऽस्मि। (चिरादभिलिख्य दर्शयति)

मकरन्दः—(चित्रं निर्वर्ण्य) उपपन्नस्तावदत्रभवतोऽभिषङ्गः। (सकौतुकम्) कथमचिरेणैव निर्माय लिखितः श्लोकः। (वाचयति)

जगति जयिनस्ते ते भावा नवेन्दुकलादयः
प्रकृतिमधुराः सन्त्येवान्ये मनो मदयन्ति ये।

---

हे मित्र! इसलिए उसके समागम मे कोई सन्देह नही रह गया है, क्योंकि उसमे ब्रह्मा ने और कामदेव ने पहले ही से अपना आग्रह कर रखा है॥३५॥

आपके ऐसे मनोविकार का कारण मालती का सुन्दर रूप भी देखने ही योग्य होगा तो आप भी उसका चित्र इसी पर उतार दें।

माधव—मित्र की जैसी इच्छा। (चित्र बनाते हुए) मित्र मकरन्द!

आँसुओं का प्रवाह उपस्थित होकर बारम्बार हमारे दोनों नेत्रों को ढँक-सा लेता है, जिससे प्रियतमा (मालती) की चिन्ता से इस कार्य मे अक्षम होकर मेरा शरीर स्तब्ध हो जाता है। यह हाथ तत्क्षण पसीना आ जाने से तथा लगातार काँपते रहने के कारण चचल अगुलियो से युक्त हो जाता है, जिससे मैं चित्र बनाने मे असमर्थ हो रहा हू। अत अब क्या करू॥३६॥

फिर भी मैं चित्र बनाने मे सावधानी बरत रहा हूँ।

(बड़ी देर मे चित्र बनाकर दिखलाता है।)

मकरन्द—(चित्र को भलीभाति देखकर) तब तो इसके प्रति तुम्हारी आसक्ति युक्तिसगत है। (कुतूहल के साथ) शीघ्र ही एक श्लोक भी बनाकर किस प्रकार लिख लिया है। (पढ़ता है।)

लोक मे अतिशय प्रसिद्ध नूतन चन्द्रकला आदि पदार्थ विजयशील है, (इसी प्रकार के) सहज सुन्दर और भी पदार्थ हैं, जो मन को सुप्रसन्न कर देते है। किन्तु

मम तु यदियं याता लोके विलोचनचन्द्रिका
नयनविषयं जन्मन्येकः स एव महोत्सवः ॥३७॥

(प्रविश्य)

मन्दारिका—कलहंस कलहंस, चोर, चोर, पदानुसारेण लब्धोऽसि। (सलज्जम्) कथं तावपि महानुभावावत्रैव। (उपसृत्य) प्रणमामि। (कलहंस कलहंस, चोर चोर, पआणुसारेण लद्धोसि। कहं दे वि महाणुहावा एत्थ एव्व। पणमामि)

उभौ—मन्दारिके, इत आगम्यताम्।

मन्दारिका—कलहंसक, उपनय चित्रफलकम्। (कलहंसक, उवणेहि चित्तफलअं)

कलहंसः—गृहाणेदम्। (गिण्ह इमं)

मन्दारिका—केन किं निमित्तं वाऽत्र मालत्यभिलिखिता। (केन किं णिमित्तं वा एत्थ मालदी अहिलिहिदा)

कलहंसः—य एव यन्निमित्तं मालत्या। (जो एव्व जंणिमित्तं मालदीए)

मन्दारिका—(सहर्षम्) दिष्ट्या उपदर्शितफलं विज्ञानं प्रजापतेः। (दिट्ठिआ उवदंसिदफलं विण्णाणं पआवइणो)

मकरन्दः—सखि मन्दारिके, यदत्र वस्तुन्यपि ते वल्लभः कथयति, अपि तत्तथा।

---

इस संसार मे नयनों के लिए चन्द्रिका के समान जो यह सुन्दरी दृष्टिगोचर हुई है वही मेरे लिए तो इस जन्म मे एक मात्र महोत्सव के समान है ॥३७॥

(प्रवेश करके)

मन्दारिका—कलहंस, कलहंस! चोर, चोर। तुम्हारे पद-चिह्नों का अनुसरण करके मैंने तुम्हें पकड़ पाया है। (लज्जापूर्वक) क्या वे दोनों महानुभाव भी यहीं पर विद्यमान हैं? (समीप आकर) प्रणाम करती हूं।

दोनों (मकरन्द और माधव)—मन्दारिके। यहाँ आ जाओ।

मन्दारिका—कलहंस! चित्रफलक (अलबम) दे दो।

कलहंस—यह लो।

मन्दारिका—किस प्रयोजन से किसने यहाँ मालती का चित्र बनाया है।

कलहंस—मालती ने जिसका, जिस कारण से (बनाया था)।

मन्दारिका—(हर्ष के साथ) सौभाग्य से विधाता की निर्माण-चातुरी फलवती हुई है।

मकरन्द—सखी मन्दारिके! इस सम्बन्ध मे तुम्हारा प्रेमी (कलहंस) जो कुछ कह रहा है, वह क्या उसी प्रकार (सत्य) है?

मन्दारिका—महाभाग, तत्तथा। (महाभाअ, तत्तहा)

मकरन्दः—क्व पुनर्मालती माधवं प्राग्दृष्टवती।

मन्दारिका—लवङ्गिका भणति वातायनगतेति। (लवंगिआ भणादि वादाअणगदेत्ति)

मकरन्दः—नन्वमात्यभवनासन्नरथ्यैव बहुशः संचरावहे। तदुपपन्नमेतत्।

मन्दारिका—अनुमन्यता महाभाग। यावदिदं भगवतो देवस्य मदनस्य सुचरितं प्रियसख्यै लवङ्गिकायै निवेदयिष्यामि। (अणुमण्णादु महाभाओ। जाव एदं भअवदो देवस्स मअणस्स सुचरिअं पिअसहीए लवंगिआए णिवेदइस्सामि)

मकरन्दः—प्राप्तावसरमेतद्भवत्याः।

(उत्थाय परिक्रामतः)

मकरन्दः—वयस्य, मध्याह्नोऽतिवर्तते। तदेहि। संस्त्यायमेव प्रविशाव.।

(उत्थाय परिक्रामतः)

माधवः—एवं हि मन्ये।

घर्माम्भोविसरविवर्तनैरिदानीं
मुग्धाक्ष्याः परिजनवारसुन्दरीणाम्।

---

मन्दारिका—महाभाग्यशालिन्! वह उसी प्रकार है।

मकरन्द—मालती ने माधव को सब से पहले कहाँ देखा।

मन्दारिका—लवंगिका का कहना है कि (अपने भवन के) झरोखे पर बैठी हुई (मालती ने माधव को) देखा है।

मकरन्द—अमात्य भूरिवसु के भवन के समीपवर्ती मार्ग से ही अधिकतर हम लोग आते-जाते रहे हैं। इसलिए ऐसा सम्भव है।

मन्दारिका—महाभाग! मुझे अनुमति दें कि मैं भगवान कामदेव के इस सदनुष्ठान (प्रेमी तथा प्रेमिका द्वारा बनाये गये एक दूसरे के सुन्दर चित्र) को अपनी प्रियसखी लवंगिका से जाकर निवेदन करूं।

मकरन्द—यह तो तुम्हारा अवसरोचित कर्तव्य है।

(उठकर दोनों घूमते हैं।)

मकरन्द—मित्र! मध्याह्न बीत रहा है। अतः यहाँ आओ। भवन को ही चलें।

(उठकर दोनों जाते हैं।)

माधव—मैं तो ऐसा मानता हूं कि

इस समय मनोहर नेत्रों वाली मालती की परिचारिका वाराङ्गनाओं के कपोलों

तत्प्रार्तविहितविचित्रपत्ररेखा-
वैदग्ध्यं जहति कपोलकुङ्कुमानि ॥३८॥

अपि च—

उन्मीलन्मुकुलकरालकुन्दकोशप्रच्योतद्धनमकरन्दगन्धवन्धो।
तामीषत्प्रचलविलोचनां नताङ्गीमालिङ्गन्पवन मम स्पृशाङ्गमङ्गम् ॥३९॥

मकरन्दः—(स्वगतम्)

अभिहन्ति हन्त कथमेष माधवं सुकुमारकायमनवग्रहः स्मरः।
अचिरेण वैकृतविवर्तदारुणः कलभं कठोर इव कूटपाकलः ॥४०॥

तदत्रभवती कामन्दकी नः शरणम्।

माधवः—(स्वगतम्)

पश्यामि तामित इतः पुरतश्च पश्चा-
दन्तर्बहिः परित एव विवर्तमानाम्।
उद्बुद्धमुग्धकनकाब्जनिभं वहन्ती-
मासक्ततिर्यगपवर्तितदृष्टि वक्त्रम् ॥४१॥

---

में विद्यमान कुंकुम, पसीने के प्रवाह के फैलजाने से प्रातःकाल में रचित पत्रावली की रचना की निपुणता का त्याग कर रहे हैं ॥३८॥

और भी,

हे वायुदेव ! तुम विकास के लिए उन्मुख मुकुलों से असमान (छोटे-बड़े) कुन्दपुष्पों के स्तबकों (गुच्छों) से स्रवित होने वाले सघन मकरन्द की सुगन्ध को धारण करने वाले हो। (अतः) किंचित् चंचल नेत्रों से युक्त अवनत अंगों वाली उस सुन्दरी का आलिंगन करके मेरे प्रत्येक अंग का स्पर्श करो ॥३९॥

मकरन्द—(अपने आप) वात, पित्त और कफ के विकारों से उत्पन्न सान्निपातिक भीषण एवं कठिन पित्त ज्वर जिस प्रकार गजशावक को अत्यधिक पीड़ित करता है। हाय ! उसी प्रकार अति कठिनाई से निवारण करने योग्य यह काम सुकुमार शरीर वाले माधव को परिपीडित कर रहा है ॥४०॥

अतः भगवती कामन्दकी ही हम लोगों की शरण (रक्षा करने वाली) हैं।

माधव—(अपने आप)

पूर्ण विकसित एवं मनोहर सुवर्णमय कमल के समान अत्यासक्ति से तिरछी चलने वाली दृष्टि से सुन्दर मुखवाली उस सुन्दरी को दाहिनी और बाईं ओर, आगे और पीछे की ओर, भीतर और बाहर की ओर—यही क्यों सभी दिशाओं में थिरकती हुई-सी (विद्यमान) देख रहा हूँ ॥४१॥

(प्रकाशम्) वयस्य, मम हि संप्रति—

प्रसरति परिमायी कोऽप्ययं देहदाह-
स्तिरयति करणानां ग्राहकत्वं प्रमोहः।
रणरणकविवृद्धिं बिभ्रदावर्तमानं
ज्वलति हृदयमन्तस्तन्मयत्वं च धत्ते ॥४२॥

(इति निष्क्रान्ताः सर्वे)

इति महाकविश्रीभवभूतिविरचिते मालतीमाधवे प्रथमोऽङ्कः ॥१॥

---

(प्रकट रूप में) मित्र! इस अवसर पर तो मेरा—

अतीव कष्ट देने वाला, अनिवर्चनीय, एक प्रकार का शारीरिक सन्ताप क्रमशः बढ़ता जा रहा है। चित्त का मोह इन्द्रियों की अपने-अपने विषयों की ग्रहण-शक्ति को आच्छादित-सा कर रहा है। कामाग्नि से सन्तप्त हृदय उत्कण्ठा अथवा उद्वेग की अधिकता को धारण करते हुए भीतर ही भीतर खूब जल रहा है और उस (मालती) के प्रति तन्मयता धारण कर रहा है॥४२॥

(सब लोग बाहर जाते हैं।)

महाकवि भवभूति रचित मालतीमाधव नाटक में प्रथम अंक समाप्त॥१॥

# द्वितीयोऽङ्कः

(ततः प्रविशतश्चेट्यौ)

**एका**—सखि, संगीतशालापरिसरेऽवलोकिताद्वितीया भगवती कामन्दकी किमपि मन्त्रयन्त्यासीत्। (हला, संगीतसालापरिसरे अवलोइआदुईआ भअवदी कामन्दई किं पि मन्तअन्ती आसी)

**द्वितीया**—सखि, तेन किल माधवप्रियवयस्येन मकरन्देन सकलो मदनोद्यान-वृत्तान्तो भगवत्यै निवेदित। ततो भर्तृदारिकां द्रष्टुकामया प्रवृत्तिनिमित्तमवलोकितानुप्रेषिता। मयाऽपि तस्यै कथितं यथा लवङ्गिकाद्वितीया विविक्ते भर्तृदारिका वर्तत इति। (सहि, तेण किल महावप्पिअवअस्सेण मअरन्देण सअलो मअणुज्जाणउत्तन्तो भअवदिए णिवेदिदो। तदो भट्टिदारिअं दट्ठुकामाए पउत्तिणिमित्तं अवलोइदा अनुप्पेसिदा। मए वि ताए कहिदं जह लवंगिआदुईआ विविक्ते भट्टिदारिआ वट्टदित्ति)

**प्रथमा**—सखि, लवङ्गिका खलु केसरकुसुमान्यवचिनोमीति गता मदनोद्यानं किं साम्प्रतं निवृत्ता। (सहि लवंगिआ क्खु केसरकुसुमाइं अवइणुम्मित्ति गआ मअणुज्जाणं किं संपदं णिउत्ता)

---

# द्वितीय अंक

[तदनन्तर दो दासियाँ प्रवेश करती हैं।]

**एक दासी**—सखी! संगीत-शाला के निकट अवलोकिता के साथ भगवती कामन्दकी कुछ गुप्त बातें कर रही थी।

**दूसरी**—सखी! माधव के प्यारे मित्र उस मकरन्द ने मदनोद्यान का सम्पूर्ण वृत्तान्त भगवती को बतला दिया था। तब भगवती ने स्वामी की कन्या को देखने की इच्छा से कि—वह कैसी है और क्या कर रही है—आदि बातों की जानकारी के लिए अवलोकिता को भेजा है। मैंने भी उनसे कह दिया है कि स्वामी की कन्या मालती निर्जन स्थान में लवंगिका के साथ बैठी हुई है।

**पहली**—सखी लवंगिका तो—बकुल के पुष्पों को चुनूंगी—ऐसा कह कर मदनोद्यान गयी थी तो क्या अब (वहाँ से) वापस आ गयी।

द्वितीया—अथ किम्। ता सत्वापतन्तीमेव हस्ते गृहीत्वाऽपरिजना भर्तृदारिकोपर्यलिन्द समारूढा। (अह इं। त क्खु आपतन्तीं एव्व हत्थे घेत्तूण अपरिअणा भट्टिदारिआ उपरिअलिन्दं समारूढा।)

प्रथमा—नून तस्य महानुभावस्य सकथयात्मान विनोदयति। (णूणं तस्स महाणुहावस्स सकहाए अत्ताण विणोदेइ)

द्वितीया—(निःश्वस्य) कुतः सत्वस्या आश्वासः। एतेनाद्य सविशेषदर्शनेनातिभूमि खलु तस्या अभिनिवेशो गमिष्यति । अन्यच्च । कल्य एव नन्दनस्य कारणान्महाराजो भर्तृदारिका प्रार्थयमानोऽमात्येन विज्ञप्त.। (कुदो क्खु से आस्सासो। एदिणा अज्ज सविसेसदसणेण अदिभूमिं क्खु ताए अहिणिवेसो गमिस्सदि। अण्ण अं। कल्ले एव्व णन्दणस्स कारणादो महाराओ भट्टिदारिअं पत्थअन्तो अमच्चेण विण्णत्तो।)

प्रथम:—किमिति। (किं त्ति)

द्वितीया—प्रभवति निजस्य कन्यकाजनस्य महाराज इति। अत आमरणं खलु मालत्या हृदयशल्य माधवानुराग इति तर्कयामि। (पहवइ णिअस्स कण्णआजणस्स महाराओ त्ति। अदो आमरणं क्खु मालदीए हिअअसल्ल माहवाणुराओ त्ति तक्केमि)

---

दूसरी—और क्या? उसे आते ही अपने हाथो से पकडकर और अन्यान्य दासियो को मनाकर स्वामी की कन्या भवन के ऊपरी भाग (अटारी) पर चढ़ गयी।

पहली—निश्चय ही उन्ही महानुभाव (माधव) की चर्चा-वार्ता मे वह अपने दिल को बहला रही होगी।

दूसरी—(गहरी सास लेकर) उस (बेचारी) को कहां से धैर्य होगा? आज जो विशेष प्रकार की भेंट हुई है उससे (माधव के प्रति) उसकी प्राप्त करने की अभिलाषा अतीव बढ गयी होगी। और भी बात तो है। आज प्रातःकाल ही अमात्य भूरिवसु ने नन्दन के लिए स्वामी-कन्या (मालती) को मांगने वाले महाराज को सूचित कर दिया है।

पहली—क्या सूचना दी है?

दूसरी—यही कि अपनी कन्या के मामले में महाराज का पूरा अधिकार है। इसलिए माधव के प्रति मालती का अनुराग आजीवन शल्य की भाति कसकता रहेगा—ऐसा मैं सोचती हू।

प्रथमा—अपि नाम भगवत्यत्र किमपि भगवतीत्वं दर्शयिष्यति। (अवि णाम भअवदी एत्थ किं वि भअवदित्तणं दंसइस्सदि।)

द्वितीया—अयि असम्बद्धमनोरथे, एहि। (अइ असंबद्धमणोरहे, एहि)

(इति निष्क्रान्ते)

प्रवेशकः।

—०—

(ततः प्रविशत्युपविष्टा सोत्कण्ठा मालती लवङ्गिका च)

मालती—सखि, ततस्ततः। (सहि, तदो तदो)

लवङ्गिका—ततस्तेन महानुभावेनोपनीतेयं बकुलमाला। (तदो तेण महाणुहावेण उवणीदा इअं उलमाला)। (इत्यर्पयति)

मालती—(मालां गृहीत्वा सहर्षं निर्वर्ण्य) सखि। एकपार्श्वविषमप्रतिबद्धेयं विरचना। (सहि, एक्कपासविसमपडिबद्धा इअ विरअणा)

लवङ्गिका—अत्रारमणीयत्वे त्वमेवापराद्धासि। (एत्थ अरमणिज्जत्तणे तुमं एव्व अवरद्धासि)

मालती—कथमिव। (कहं विअ)

लवङ्गिका—येन स दूर्वाश्यामलाङ्गस्तथा विहस्तीकृतः। (जेण सो दुव्वासामलङ्गो तहा विहत्थीकिदो)

---

पहली—(किन्तु मुझे तो भरोसा है कि) भगवती कामन्दकी इस मामले में अवश्य ही अपनी कोई महिमा दिखलाएगी।

दूसरी—अरी ऊटपटांग अभिलाषा रखनेवाली! चलो आओ।

(दोनों जाती हैं।)

प्रवेशक समाप्त

—०—

(तदनन्तर उत्कण्ठायुक्त मालती और लवंगिका बैठी हुई दिखाई पड़ती हैं।)

मालती—सखी! फिर इसके बाद?

लवंगिका—तब उन महानुभाव ने यह बकुलमाला मुझे दे दी।

(माला मालती को देती है।)

मालती—(माला लेकर हर्षपूर्वक देखती हुई) सखी! इसकी रचना एक ओर तो बिल्कुल उल्टी है।

लवंगिका—इस असुन्दरता मे आप ही अपराधिनी हैं।

मालती—सो कैसे?

लवंगिका—जो उस दूर्वा के समान श्यामल अंगो वाले को बिना हाथ का (व्याकुल) कर दिया था।

मालती—सखि लवङ्गिके, सर्वथाऽऽश्वासनशीलासि। (सहि लवङ्गिए, सव्वहा आसासणसीलासि)

लवङ्गिका—सखि, अत्र काऽऽश्वासनशीलता। ननु भणामि। सोऽपि प्रियसख्या मन्दमारुतप्रचलितप्रफुल्लपुण्डरीकविभ्रमाभ्यां प्रथमारब्धबकुलावलीविरचनापदेशसंयमनबलात्कारविस्तृताभ्यां लोचनाभ्यां विजृम्भमाणविस्मयस्तिमितदीर्घपर्यन्तपरिस्पन्दनाविलासोल्लसितभ्रूलताविभावितानङ्गशरसरम्भविभ्रमविदग्धमवलोकयन्प्रत्यक्षीकृत एव। (सहि, एत्थ का आसासणसीलदा। णं भणामि। सो वि पिअसहीए मन्दमारुअप्पअलिअप्पफुल्लपुण्डरीअविब्भमेहिं पढमारद्धबउलावलीविरअणाववेसराअमणबलामोडिअवित्थरन्तेहिं लोअणेहिं विअम्भमाणविम्हअत्थिमिददीहपेरन्तपरिअन्तणाविलासुल्लसिअभूलदाविहाविदाणङ्गसरसरम्भविब्भमविअड्ढ ओलोअन्तो पच्चक्खीकिदो एव्व)

मालती—(लवङ्गिकां परिष्वज्य) आम् प्रियसखि! किं तावत्तस्य स्वाभाविका एव ते मुहूर्तसंनिधायिनो जनस्य विप्रलम्भयितृका विलासाः। आहोस्वित्प्रियसखी यथा सम्भावयति। (आम् पिअसहि, किं दाव तस्स साहाविआ एव्व ते मुहुत्तसंणिहाइणो जणस्स विप्पलम्भइत्तआ विलासा, आदु पिअसही जहा संभावेदि)

लवङ्गिका—(विहस्य सासूयमिव) त्वमपि स्वाभावेनैव तस्मिन्नवसरेऽसङ्गीतकं नर्तितासि। (तुमं वि सहावेण एव्व तस्सि अवसरे असंगीदअं णच्चाविदासि)

---

मालती—सखी लवंगिके! तुम सब प्रकार से धैर्य बधानेवाली हो।

लवंगिका—सखी! इसमें धैर्य बधाने की क्या बात है? अरी! मैं तो कहती हूं। मन्द-मन्द वायु के झोकों से सचालित एवं विकसित कमल के समान मनोहर एवं पहले से आरम्भ बकुलमाला की रचना को समाप्त करने के बहाने अपने मनोविकारों को छिपाने की इच्छा से जबर्दस्ती फैले हुए दोनों नेत्रों से, जब वह तुम्हें देख रहे थे तो प्रियसखी ने स्वयं प्रत्यक्ष देखा होगा कि उस समय उनका विस्मय कितना बढ़ गया था, जिसमें उनके निश्चल एवं दीर्घ भौंहों के कटाक्ष से युक्त नेत्र-ताराएं फड़क रही थीं और उनकी वक्रिम भ्रूलता संकेत कर रही थी कि कामदेव के बाणों का कैसा प्रहार उन पर हुआ है।

मालती—(लवंगिका का आलिंगन करते हुए) हे प्रियसखी! इस प्रकार कुछ क्षण तक विद्यमान उन महानुभाव के युवतियों को धोखा देनेवाले ये मनोविकार क्या स्वाभाविक थे, अथवा जैसा तू अनुमान कर रही है वैसे थे?

लवंगिका—(हँसते हुए कुछ ईर्ष्या से) उस अवसर पर तो तुमको (तुम्हारे) स्वभाव ने विना संगीत के ही नचाया था।

मालती—(सलज्जं विहस्य) हुं, ततस्ततः। (हुं, तदो तदो)

लवङ्गिका—ततः प्रतिनिवर्तमानयात्राजनमङ्कुलेनान्तरिते तस्मिन्मन्दारिकागृहमुपगतास्मि। तस्याश्चित्रफलकं प्रभाते हस्तीकृतमासीत्। (तदो पडिणिउत्तमाणजत्ताजणसंकुलेण अन्तरिदे तस्सि मन्दारिआघरं उवगदम्हि। ताए चित्रफलअं पहादे हत्थीकिदं आसी)

मालती—किंनिमित्तम्। (किंणिमित्तं)

लवङ्गिका—सा खलु माधवानुचरः कलहंसकः कामयते। सा तस्य दर्शयिष्यतीति। ततः प्रियनिवेदिका मन्दारिका संवृत्ता। (तं क्खु माहवाणुअरो कलहंसओ कामेदि। सा तस्स दंसइस्सदित्ति। तदो पिअणिवेदिआ मन्दारिआ संवुत्ता)

मालती—(स्वगतम्। सानन्दम्) नूनं तेनापि कलहंसकेनैतत्प्रतिच्छन्दकमात्मनः प्रभोर्दर्शितं भविष्यति। (प्रकाशम्) सखि, किमिदानीं ते प्रियम्। (णूणं तेण वि कलहंसएण एदं पडिच्छन्दअं अत्तणो पहुणो दंसिदं हुविस्सदि। सहि, किं दाणीं दे पिअं)

लवङ्गिका—एतत्खलु सन्तापितस्य तव सन्तापकारिणो दुर्लभमनोरथावेशदुःसहायासदह्यमानचित्तस्य क्षणमात्रनिर्वापयितृकं तव प्रतिच्छन्दकम्। (इति चित्रं दर्शयति) (एदं क्खु संदाविदस्स तुह सदावआरिणो दुल्लहमणोरहावेसदूसहाआसदज्झन्तचित्तस्स खणमेत्तणिव्वावइत्तअं तुह पडिच्छन्दअं)।

---

मालती—(लज्जापूर्वक हँसती हुई) हूं। तब फिर।

लवंगिका—तदनन्तर उस महोत्सव से उठे हुए सारे लोग जब वापस जाने लगे तो उनकी भीड़ के भीतर उनके (माधव के) छिप जाने पर मैं मन्दारिका के घर चली गयी। (आज) प्रातःकाल ही मैंने वह चित्रफलक मन्दारिका के हाथ में दिया था।

मालती—किस लिए।

लवंगिका—उस (मन्दारिका) को माधव का सेवक कलहंस बहुत चाहता है। इसलिए वह उसे दिखलाएगी। उसके बाद तो मन्दारिका हमारा प्रिय निवेदन करने वाली ही बन गयी।

मालती—(अपने आप। आनन्दपूर्वक) निश्चय ही उस कलहंस ने वह चित्रफलक अपने स्वामी (माधव) को दिखलाया होगा। (प्रकट रूप में) सखी! अब तुम्हारा प्रिय विषय क्या है?

लवंगिका—यही तुम्हारे न मिलने में सन्तापित (जलाये गये) और तुमको सन्तप्त करने वाले, एवं दुर्लभ मनोरथ के दुःसह आयास से दग्ध चित्त वाले माधव को कुछ क्षणों तक शीतल करने वाला तुम्हारा यह चित्रफलक। (ऐसा कहकर चित्र दिखलाती है।)

मालती—(सहर्षोच्छ्वासं चिरं निर्वर्ण्य) अहो, इदानीमपि हृदयस्य मेऽनाश्वासः। येनेदमप्याश्वासन विप्रलम्भ इति सम्भाव्यते कथमक्षराण्यपि। ('जगति जयिनः' इत्यादि पठति। सानन्दम्) महाभाग! सदृश खलु ते निर्माणस्य वचनमधुरतया। दर्शनं पुनस्तत्कालमनोहरं परिणामदीर्घसन्तापदारुण च। धन्याः खलु ताः स्त्रियो यास्त्वां न प्रेक्षन्ते। प्रेक्ष्यात्मनो हृदयस्य वा प्रभवन्ति। (अम्हो, दाणीं वि हिअअस्स मे अणासासो। जेण एद वि आसासणं विप्पलम्भो त्ति सम्भावीअदि। कहं अक्खराइं वि। महाभाअ, सरिसं क्खु दे णिम्माणस्स वअणमहुरदाए। दसण उण तक्कालमणोहरं परिणामदीहसंदावदारुण अ। धण्णाओ क्खु ताओ इत्थिआओ जाओ तुमं ण पेक्खन्दि। पेक्खिअ अत्तणो हिअअस्स वा पहुवन्दि)

लवङ्गिका—सखि, एवमपि नास्ति ते आश्वासः। (सहि, एव्व वि णत्थि दे आसासो)

मालती—कथमिव। (कहं विअ)

लवङ्गिका—यस्य कारणात्त्वमुत्खण्डितबन्धन कङ्केल्लिपल्लवमिव हृदयं धारयन्ती क्लाम्यन्नवमालिकाकुसुमनिःसहा कुसुमायुधेन परिहीयसे, सोऽपि ज्ञापितो भगवता मन्मथेन सन्तापस्य दुःसहत्वम्। (जस्स करणादो तुमं उक्खण्डिअबन्धणं कङ्केल्लिपल्लवं विअ हिअअं धरेन्दी किलन्दणोमालिआकुसुमणीसहा कुसुमाउहेण परिहिज्जसि, सो वि आणाविदो भअवदा मम्महेण संदावस्स दूसहत्तणम्)

मालती—(हर्ष और उच्छ्वास के साथ बड़ी देर तक ध्यानपूर्वक देखती हुई) अहो! अब भी मेरे हृदय को आश्वासन (धैर्य) नहीं है। क्योंकि यह आश्वासन भी प्रवचना हो सकते हैं। इसमे कुछ अक्षर भी (लिखावट भी) हैं। (जगति जयिनः आदि श्लोक पढ़ती है। फिर आनन्दपूर्वक) महाभाग्यशालिन्! आपकी जैसी (मनोहर) आकृति है वैसी ही वाणी की मधुरता भी है। आपका यह दर्शन भी उस समय तो मनोहर था किन्तु परिणाम उसका दीर्घकाल व्यापी सन्ताप से दारुण है। वे सुन्दरियां धन्य हैं जो तुम्हें नहीं देखती हैं। अथवा जो तुम्हें देखकर भी अपने को और हृदय को वश मे रखती है।

लवंगिका—सखि! इतना होने पर भी क्या तुम्हें आश्वासन नहीं है।

मालती—कैसे हो?

लवंगिका—जिसके कारण तुम उच्छिन्न मूलवाले अशोक के पल्लव के समान हृदय को धारण करती हुई, मुरझाई हुई नवमल्लिका के पुष्प के समान अति सुकुमार होते हुए भी कामदेव से क्षीण कर दी गयी हो, उसी प्रकार उन्हें (माधव) भी भगवान् कामदेव ने सन्ताप की दुःसहता का ज्ञान करा दिया है।

मालती—सखि, कुशलमिदानी तस्य महाप्रभावस्य भवतु। मम पुनः सुदुर्लभ आश्वासः। (सास्रम् संस्कृतमाश्रित्य) (सहि, कुसलं दाणीं तस्स महाप्पहावस्स होदु। मह उण सुदुल्लहो आसासो)।

मनोरोगस्तीव्रो विषमिव विसर्पत्यविरतं
प्रमाथी निर्धूमो ज्वलति विधुतः पावक इव।
हिनस्ति प्रत्यङ्गं ज्वर इव गरीयानित इतो
न मां त्रातुं तातः प्रभवति न चाम्बा न भवती॥१॥

लवङ्गिका—एवमेतत्। प्रत्यक्षसौख्यदायिनः परोक्षदुःखदुःसहाः सज्जनसमागमा भवन्ति। अपि च प्रियसखि! यस्य वातायनान्तरमुहूर्त्तदर्शनेनापि सुसमिद्धहुतवहायमानपूर्णचन्द्रोदया निष्करुणकामव्यापारसंशयितजीविता ते शरीरावस्था, तस्यैव साम्प्रतं सविशेषदर्शनादद्य सन्तप्यस इति किमत्र भणितव्यम्। तदत्र प्रियसखि! श्लाघनीयं दुर्लभमनोरथफलं जीवलोकस्य यद्गुरुकानुरागसदृशो महाभागवल्लभसमागम इत्येतावज्जानीमः। (एव्वं एदं। पच्चक्खसोक्खदाइणो परोक्खदुक्खदूसहा सज्जणसमाअमा होन्ति। अवि अ पिअसहि, जस्स वादाअणन्दरमुहुत्तदंसणेण वि सुसमिद्धहुदवहाअन्तपुण्णचन्दोदया णिक्करुणकामव्वार-संसइदजीविदा दे सरीरावत्था, तस्स एव्व संपदं सविसेसदसणादो अज्ज संतप्पसि त्ति किं एत्थ भणिदव्वम्। ता एत्थ पिअसहि, सलाहणिज्ज दुल्लहमणोरहफलं

---

मालती—सखी! उन महानुभाव का मंगल हो। किन्तु मुझे तो आश्वासन दुर्लभ है। (आंखो मे आंसू भर कर। संस्कृत भाषा का सहारा लेकर)

तीव्र एवं अतीव अशान्ति देने वाली मन की पीडा विष की भांति निरन्तर फैलती जा रही है। धूआ से रहित वायु द्वारा विकम्पित अग्नि की ज्वाला की तरह जल रही है। गुरुतर ज्वर के समान प्रत्येक अंग को भीतर और बाहर से पीडित कर रही है। (ऐसी स्थिति मे) मेरी रक्षा करने में न पिता जी समर्थ हैं, न माता जी समर्थ हैं और न आप ही समर्थ हैं॥१॥

लवंगिका—ऐसा ही होगा। सत्पुरुषो के समागम प्रत्यक्ष मे सुखदायी और परोक्ष में दुःखदायी होने के कारण दुःसह होते हैं। और भी हे प्रियसखी! जिसको झरोखे के भीतर से कुछ ही क्षणो तक देखने मात्र से भी तुम्हारे शरीर की अवस्था ऐसी बन गयी है कि पूर्णचन्द्रमा का उदय भी अतीव जलते हुए अग्नि की भांति जलाने वाला मालूम पड रहा है और निर्दय काम के व्यापार के कारण जीवन भी संशययुक्त हो गया है सो उसी व्यक्ति के इस समय विशेष दर्शन करने से तुम इस प्रकार सन्तप्त हो रही हो तो इस विषय मे क्या कहा जाय? हे प्रिय सखी!

जीअलोअस्स जं गुरुआणुराअसरिसो महाभाअवल्लहसमाअमो त्ति एत्तिअं जाणीमो।)

मालती—सखि, दयितमालतीजीविते, साहसोपन्यासिनि, अपेहि। (सास्रम्) अथवा। अहमेव वारवार विलोकयन्ती पलायमानप्रतिष्ठापितधीरत्वावष्टम्भेनात्मनो हृदयेन दूर विलीयमानलज्जत्वेन दुर्विनयलघ्व्यत्रापराध्यामि। तथापि प्रियसखि। (संस्कृतमाश्रित्य) (सहि, दइदमालदीजीविदे, साहसोवण्णासिणि, अवेहि। अहवा। अह एव्व वारवार विलोअअन्ती पलाअंतपडिठाविदधीरत्तणावट्ठम्भेण अत्तणो हिअएण दूरं विलीअन्तलज्जत्तेण दुव्विणअलहुआ एत्थ अवरज्झम्मि। तहावि पिअसहि।)

ज्वलतु गगने रात्रौ रात्रावखण्डकलः शशी
दहतु मदनः किं वा मृत्योः परेण विधास्यतः।
मम तु दयितः श्लाघ्यस्तातो जनन्यमलान्वया
कुलममलिनं न त्वेवायं जनो न च जीवितम्॥२॥

---

इसलिए अति गंभीर अनुराग के उपयुक्त भाग्यशाली प्रियतम का सम्मिलन इस जीव लोक की दुर्लभ कामना का आदरणीय परिणाम होता है—हम इतना जानती हैं।

मालती—सखी! मालती का जीवन तुम्हें प्रिय है। तुम साहस भरे कार्य करने का उपदेश करती हो। (अत.) तुम यहाँ से दूर जाओ अर्थात् हट जाओ। (आसू बहाते हुए) अथवा, मैं ही उनको बारम्बार देखती हुई अपने ही हृदय द्वारा अपराधिनी बनी हू जो कि पहले भागते हुए और बाद मे धैर्य्य धारण करने से स्थिर हृदयवाली मैं निर्लज्जता एव अविनयशीलता के कारण लघुता को प्राप्त हुई हूँ। फिर भी हे प्रियसखी! (संस्कृत भाषा का आश्रय लेकर)

प्रत्येक रात्रि मे आकाश मे अपनी सम्पूर्ण कलाओ से युक्त होकर चन्द्रमा प्रज्ज्वलित होते रहें। कामदेव जलाते रहे। ये दोनो मृत्यु से बढकर हमारा और अधिक क्या बिगाड सकते हैं। मेरे पिता जी प्रिय और प्रशसनीय हैं, माता उच्चकुल मे उत्पन्न और प्रिय हैं। मेरा वश भी निष्कलक और प्रिय है, किन्तु वह व्यक्ति (माधव) और मेरा जीवन ये दोनो प्रिय नही है। (तात्पर्य यह है कि मैं अपने माता-पिता एवं कुल की मर्यादा की रक्षा करूगी। अपने जीवन को त्याग सकती हूं अथवा उस व्यक्ति को त्याग सकती हू, किन्तु मर्यादा का उल्लंघन नही कर सकती।) ॥२॥

लवङ्गिका—(स्वगतम्) अत्रेदानी क उपायः। (एत्थ दाणीं को उवाओ।)

(नेपथ्यार्धप्रविष्टा)

प्रतिहारी—एषा भगवती कामन्दकी। (एसा भअवदी कामन्दई।)

उभे—किं भगवती। (किं भअवई।)।

प्रतिहारी—भर्तृदारिका द्रष्टुकामाऽऽगता। (भट्टिदारिअं दट्ठुआमा आअदा।)

उभे—ततः किं विलम्ब्यते। (तदो किं विलम्बीअदि।)

(निष्क्रान्ता प्रतिहारी। मालती चित्रं छादयति)

लवङ्गिका—(स्वगतम्) सुसमाहितं खलु जातम्। (सुसमाहिदं क्खु जादम्)।

(ततः प्रविशति कामन्दक्यवलोकिता च)

कामन्दकी—साधु सखे भूरिवसो, साधु। 'प्रभवति निजस्य कन्यकाजनस्य देव' इत्युभयलोकाविरुद्धमुत्तरमुपन्यस्तम्। अपि च। अद्य मन्मथोद्यानवृत्तान्तेन भगवतो विधेरप्यनुकूलतामवगच्छामि। वकुलावलीचित्रफलकव्यतिकरस्तु कमप्यद्भुततमं

---

लवंगिका—(अपने आप) अब यहाँ (ऐसी दशा मे) क्या उपाय है?

(पर्दे के भीतर से आधा प्रविष्ट होकर)

प्रतीहारी—यह भगवती कामन्दकी (आ रही है)।

दोनों—क्या स्वय भगवती (आ रही है।)।

प्रतीहारी—स्वामीकन्या को देखने के लिए आयी है।

दोनों—तब क्यों विलम्ब कर रही हो।

(द्वारपालिका जाती है। मालती चित्रफलक को ढंक लेती है।)

लवंगिका—(अपने आप) (अब तो) निश्चय ही काम अच्छी तरह बन गया।

(तदनन्तर कामन्दकी और अवलोकिता प्रवेश करती है।)

कामन्दकी—वाह मित्र भूरिवसु! वाह! अपनी कन्या के सम्बन्ध मे महाराज सब कुछ कर सकते हैं—यह दोनों लोको के लिए अनुकूल उत्तर आपने दिया। और भी। आज कामोद्यान मे घटित घटना से भगवान् विधाता की भी अनुकूलता है—मैं ऐसा समझती हूं। (माधव द्वारा बनायी गयी) वकुल की माला एवं (मालती द्वारा बनाये गये) चित्रफलक की अदला-बदली भी मेरे मन मे अतीव अद्भुत हर्ष उत्पन्न कर रही है। क्योंकि विवाह कर्म मे एक दूसरे का अनुराग ही उत्तम मंगल होता है। महर्षि अंगिरा ने ऐसा कहा है कि—जिस कन्या मे मन और

प्रमोदमुल्लासयति। इतरेतरानुरागो हि विवाहकर्मणि परार्घ्यं मङ्गलम्। गीतश्चायमर्थोऽङ्गिरसा यस्यां मनश्चक्षुषोर्निबन्धस्तस्यामृद्धिरिति।

अवलोकिता—एषा मालती। (एषा मालदी)।

कामन्दकी—(निर्वर्ण्य)

निकामं क्षामाङ्गी सरसकदलीगर्भसुभगा
कलाशेषा मूर्तिः शशिन इव नेत्रोत्सवकरी।
अवस्थामापन्ना मदनदहनोद्दाहविधुरा-
मियं नः कल्याणी रमयति मनः कम्पयति च॥३॥

अपि च—

परिपाण्डुपांसुलकपोलमाननं दधती मनोहरतरत्वमागता।
रमणीयजन्मनि जने परिभ्रमंल्ललितो विधिर्विजयते हि मान्मथः॥४॥

नियतमनया संकल्पनिर्मित. प्रियसमागमोऽनुभूयते। तथा ह्यस्या —

नीवीबन्धोच्छ्वसनमधरस्पन्दनं दोर्विषादः
स्वेदश्चक्षुर्मसृणमुकुलाकेकरस्निग्धमुग्धम्।

---

नेत्र बंध जाय, उससे विवाह करने मे (पुरुष को) सब प्रकार की समृद्धि होती है।

अवलोकिता—यह मालती है।

कामन्दकी—(भलीभांति देखकर) गीली कदली के स्तम्भ के मध्यवर्ती भाग की भांति श्वेतवर्णा सुन्दरी, कृशांगिनी एवं कलामात्र शेष चन्द्रमा की मूर्ति के समान नेत्रो को उत्सव सुख देनेवाली यह कल्याणी मालती कामाग्नि के उत्कट दाह से विह्वल अवस्था को प्राप्त होकर हमारे मन को आनन्दित भी करती है और कंपाती भी है॥३॥

और भी, विशेष रूप से इसके दोनों कपोल रूखे और श्वेतवर्ण के हो गये हैं, जिनसे युक्त मुख को धारण करती हुई यह और भी मनोहारिणी हो गयी है। सत्य है, सौन्दर्यशाली लोगो मे विचरण करता हुआ सुन्दर कामदेव का कोमल व्यापार विजयशील होता ही है॥४॥

निश्चय ही मालती, अपने मन की कल्पना के अनुसार प्रियतम के समागम का सुखानुभव कर रही है। क्योंकि इसके,

कटि भाग मे बंधी नीवी खुलती जा रही है, ओठ कांप रहे हैं, दोनों भुजाओं में (शिथिलता दिखाई पड रही) है, पसीना निकल रहा है, दोनों नेत्र चिकने कोमल कुड्मल के समान कुछ संकुचित हो गये हैं और स्नेहयुक्त तथा मनोहर हो गए हैं।

गात्रस्तम्भः स्तनमुकुलयोरुत्प्रबन्धः प्रकम्पो
गण्डाभोगे पुलकपटलं मूर्च्छना चेतना च॥५॥

(उपसर्पति)

(लवङ्गिका मालतीं चालयति। उभे उत्तिष्ठतः।)

मालती—भगवति, वन्दे। (भअवदि, वन्दामि)।

कामन्दकी—महाभागधेयजन्मतायाः फलस्य भाजनं भूयाः।

लवङ्गिका—भगवति, एतत्पवित्रमासनम्। (भअवदि,एदं पवित्तं आसणम्।)

(सर्वा उपविशन्ति)

मालती—कुशलं भगवत्याः। (कुसलं भअवदीए।)

कामन्दकी—(निःश्वस्य) कुशलमिव।

लवङ्गिका—(स्वगतम्) प्रस्तावना खल्वेषा कपटनाटकस्य। (प्रकाशम्) गुरुकबाष्पभरस्तम्भमन्थरितकण्ठप्रतिलग्ननिर्गममन्यादृशमिवाद्य भगवत्या वचनम्। तत्किमिदानीमुद्वेगकारणं भविष्यति। (पत्थावणा क्खु एसा कवडणाडअस्स। गुरुअवाहभरत्थम्भमन्थरिदकण्ठप्पडिलग्गणिग्गमं अण्णारिसं विअ अज्ज भअवदीए वअणम्। ता किं दाणीं उव्वेअकारणं हविस्सदि।)

---

शरीर स्तब्ध हो रहा है, स्तन कलिकाएँ धीरता के टूट जाने की सूचना देती हुई काँप रही हैं, कपोल स्थलों पर रोमांच हो आया है, कभी यह मूर्च्छित-सी दिखाई पड़ती है, और कभी चैतन्य युक्त॥५॥

(समीप जाती है।)

(लवंगिका मालती को हिलाती है। दोनों उठ कर खड़ी होती हैं।)

मालती—भगवती! मैं नमस्कार करती हूँ।

कामन्दकी—अपने महान् भाग्यशाली जन्म के अनुरूप सफलता का भाजन बनो।

लवंगिका—भगवती! यह (आपके बैठने के लिए) पवित्र आसन है।

(सब बैठती हैं।)

मालती—भगवती का कुशल-मंगल तो है?

कामन्दकी—(गहरी साँस खींच कर) हाँ, मंगल ही है।

लवंगिका—(अपने आप) यह कपट-नाटक की प्रस्तावना है। (प्रकट रूप में) भीतर की गहरी साँस के अवरोध के कारण कण्ठ से बहुत धीमे निकलते हुए स्वर से युक्त आप की वाणी कुछ दूसरी ही तरह की मालूम पड़ रही है। तो इस समय आपके उद्वेग का क्या कारण है?

कामन्दकी—नन्वयमेव चीरचीवरविरुद्ध. परिचयः।

लवङ्गिका—कथमिव। (कहं विअ)।

कामन्दकी—अयि, त्वमपि किं न जानीषे।

इदमिह मदनस्य जैत्रमस्त्रं
सहजविलासनिबन्धनं शरीरम्।
अनुचितवरसंप्रदानशोच्यं
विफलगुणातिशयं भविष्यतीति॥६॥

(मालती वैचित्र्यं नाटयति)

लवङ्गिका—अस्त्येतन्नरेन्द्रवचनानुरोधेन नन्दनस्य प्रतिपन्ना मालतीति सकलो जनोऽमात्यं जुगुप्सते। (अत्थि एवं जं णरेन्दवअणाणुरोहेण णन्दणस्स पडिवण्णा मालदित्ति सअलो जणो अमच्चं जुउच्छइ।)

मालती—(स्वगतम्) कथमुपहारीकृतास्मि राजस्तातेन। (कह उवहारीकिदम्हि राइणो तादेण।)

कामन्दकी—आश्चर्यम्।

---

कामन्दकी—अरे यही जो जीर्ण वस्त्रों के टुकड़ों से बनी गुदडी के विरुद्ध तुम जैसे लोगों का परिचय मुझसे हो गया है।

लवंगिका—किस प्रकार से।

कामन्दकी—अरे! क्या तुम भी नही जानती हो।

इस मालती मे कामदेव का विजयशील अस्त्र, सहज विभ्रम-विलास का स्थान यह शरीर, अयोग्य वर (नन्दन) के हाथो मे इसका प्रदान किया जाना और (इस प्रकार) इसके अतीव उत्कृष्ट गुण निष्फल हो जायगे—इन्ही बातो की मुझे चिन्ता है॥६॥

(मालती मन की विह्वलता को प्रदर्शित करने का नाट्य करती है।)

लवंगिका—आपका कहना ठीक ही हैं। क्योकि सभी लोग अमात्य (भूरिवसु) की इस बात के लिए निन्दा कर रहे हैं कि वे राजा के अनुरोध के कारण मालती का नन्दन के लिए प्रदान करेंगे।

मालती—(अपने आप) पिता जी ने क्यों और कैसे मुझे राजा के लिए उपहार बना दिया?

कामन्दकी—आश्चर्य है।

गुणो (सौन्दर्य उदारता आदि) का विचार बिना किए ही यह कर्म (नन्दन के साथ मालती का विवाह) किस प्रकार आरम्भ कर दिया। अथवा कुटिल

गुणापेक्षाशून्यं कथमिदमुपक्रान्तमथवा
कुतोऽपत्यस्नेहः कुटिलनयनिष्णातमनसाम्।
इदं त्विदम्पर्यं यदुत नृपतेर्नर्मसचिवः
सुतादानान्मित्रं भवतु स भवान्नन्दन इति॥७॥

मालती—(स्वगतम्) राजाराधनं खलु तातस्य गुरुकम् न पुनर्मालती। (राआराहणं क्खु तादस्स गुरुअं, ण उण मालदी।)

लवङ्गिका—यथा भगवत्याज्ञापयति न तत्तथैव। अन्यथा तस्मिन्वरे दुर्दर्शनेऽतिक्रान्तयौवने किमिति न विचारितममात्येन। (जहा भअवदी आणवेदि तं तह ज्जेव्व। अण्णहा तस्सिं वरे दुद्दंसणे अदिक्कन्दजोव्वणे किं ति ण विआरिदं अमच्चेण।)

मालती—(स्वगतम्) हा, हतास्मि समुपस्थितानर्थवज्रपतना मन्दभागिनी। (हा, हदम्हि समुवत्थिदाणत्थवज्जपडणा मन्दभाइणी।)

लवङ्गिका—तत्प्रसीद। भगवति, परित्रायस्वास्माज्जीवन्मरणात्प्रियसखीम्। तवाप्येषा दुहितैव। (ता पसीद। भअवदि, परित्ताहि एदो जीवन्मरणादो पिअसहिं। तुह वि एसा दुहिदा ज्जेव्व।)

कामन्दकी—अयि सरले, किमत्र भगवत्या शक्यम्। प्रभवति प्रायः कुमारीणां जनयिता दैवं च। यच्च किल कौशिकी शकुन्तला दुष्यन्तमप्सराः पुरूरवसं चकमे

---

नीति में निपुण चित्तवालों में अपनी सन्तानों के प्रति स्नेह कहाँ रहता है? इसका तात्पर्य तो यही है कि राजा के क्रीडा-सहचर माननीय नन्दन जी कन्या-दान करने से हमारे मित्र बन जायगे॥७॥

मालती—(अपने आप) महाराज को सन्तुष्ट करना पिता जी को अधिक महत्त्वपूर्ण मालूम पड़ता है किन्तु मालती की प्रसन्नता की उन्हें चिन्ता नहीं है।

लवंगिका—इस विषय में भगवती (आप) जैसा कह रही है वैसी बात नहीं है। अन्यथा जवानी के बीत जाने से देखने में कुरूप उस वर में क्या (आकर्षण रखा) है—इसका विचार अमात्य महोदय ने नहीं किया।

मालती—(अपने आप) हाय। मैं तो मर गयी। अनिष्ट रूपी वज्रपात मेरे सम्मुख उपस्थित है। मैं मन्दभागिनी हूँ।

लवंगिका—अतः आप सुप्रसन्न हों। हमारी प्रिय सखी की इस जीवित-मृत्यु से रक्षा कीजिये। यह आपकी भी तो पुत्री ही है।

कामन्दकी—हे सरले। (तुम्हारी) भगवती (मैं) इस विषय में भला क्या

उर्वशीत्याख्यानविद आचक्षते, वासवदत्ता च पित्रा संजयाय राज्ञे दत्तमात्मान-मुदयनाय प्रायच्छदित्यादि, तदपि साहसकल्पमित्यनुपदेष्टव्यमेव। सर्वथा।

राज्ञः प्रियाय सुहृदे सचिवाय कार्या-
द्दत्त्वात्मजां भवतु निर्वृतिमानमात्यः।
दुर्दर्शनेन घटतामियमप्यनेन
धूमग्रहेण विमला शशिनः कलेव॥८॥

मालती—(स्वगतम्) *हा तात, त्वमपि मम नामैवमिति जित भोगतृष्णया।* (हा ताद, तुम वि मम णाम एव्वं त्ति जिदं भोगतिण्हाए।)

अवलोकिता—विरायितं भगवत्या। ननु भणाम्यस्वस्थचित्तो महाभागो माधव इति। (विराइदं भअवदीए। णं भणामि अस्सत्थचित्तो महाभाओ माहवो त्ति।)

कामन्दकी—इद गम्यते। वत्से, अनुजानीहि माम्।

लवङ्गिका—(*जनान्तिकम्*) *सखि मालति, साम्प्रत भगवत्याः सकाशात्तस्य* महानुभावस्योद्गमं जानीमः। (सहि, मालदि, संपदं भअवदीए सआसादो तस्स महाणुहावस्स उग्गमं जाणीमो।)

---

कर सकती है। प्रायः कुमारी कन्याओं के लिए माग्य एव पिता ही सब कुछ करने मे प्रभु (समर्थ) हैं। विश्वामित्र की कन्या शकुन्तला ने राजा दुष्यन्त की और उर्वशी नाम की अप्सरा ने राजा पुरूरवा की कामना की—इन कथाओं को पुराणों के जाननेवाले कहते हैं और पिता द्वारा राजा सजय को वचन से प्रदत्त वासवदत्ता ने अपने को (स्वेच्छया) राजा उदयन को सौंप दिया—ये सब (पुराने उदाहरण सुने जाते) हैं—किन्तु ये सब भी प्रायः साहस भरे कार्य हैं। इनका उपदेश (हमें) तो नहीं ही करना चाहिए।

सब प्रकार से अमात्य (भूरिवसु) राजा के प्रिय (नन्दन) को किसी विशेष उद्देश्य से अपनी कन्या को प्रदान करके सुखी हो और धूमकेतु के सहित निर्मल चन्द्रकला के समान मालती भी कुरूप नन्दन के साथ समवेत हो॥८॥

मालती—(अपने आप) हाय तात! आप भी मेरे लिए इस प्रकार (निष्ठुर) हो गये। भोग-लिप्सा की ही सब प्रकार से विजय हुई।

अवलोकिता—भगवती ने विलम्ब कर दिया। मैं कहती हूँ कि महाभाग्य-शाली माधव जी अस्वस्थचित्त हैं।

कामन्दकी—यह (मैं) जाती हूँ। बेटी! मुझे आज्ञा दो।

लवंगिका—(केवल मालती को सुनाकर) सखी मालती! इस समय भगवती से उन महानुभाव (माधव) के जन्मादि का वृत्तान्त (हम लोग) जान लें।

मालती—(जनान्तिकम्) अस्ति मे कौतूहलम् । (अत्थि मे कोदूहलम्) ।

लवङ्गिका—(प्रकाशम्) क एष माधवो नाम, यस्मिन्भगवत्येवं स्नेहगुरु-कमात्मानं धारयति। (को एसो माहवो णाम, जस्सि भअवदी एव्वं सिणेहगुरुअं अत्ताणं धारेदि।)

कामन्दकी—अप्रस्ताविनी महत्येषा कथा।

लवङ्गिका—तथाप्याख्याय भगवती प्रसादं करोतु। (तह वि आअक्खिअ भअवदी पसादं करेदु।)

कामन्दकी—श्रूयताम्। अस्ति विदर्भराजस्यामात्यः समग्रपुरुषप्रकाण्ड-चक्रचूडामणिर्देवरातो नाम । यमशेषभुवनमहनीयपुण्यमहिमानमात्मनः साती-र्थ्यात्पितैव ते जानाति योऽसौ यादृग्यश्चेति । अपि च।

व्यतिकरितदिगन्ताः श्वेतमानैर्यशोभिः
सुकृतविलसितानां स्थानमूर्जस्वलानाम्।
अगणितमहिमानः केतनं मङ्गलानां
कथमिव भुवनेऽस्मिंस्तादृशाः संभवन्ति॥९॥

मालती—(सहर्षम्) सखि, तं खलु भगवत्या गृहीतनामधेयं सर्वथा तातः स्मरति। (सहि, तं क्खु भअवदीए गहीदणामहेअं सव्वहा तावो सुमरेदि।)

---

मालती—(केवल लवंगिका को सुनाकर) मुझे उत्कण्ठा है।

लवंगिका—(प्रकट रूप में) यह माधव कौन हैं, जिनके विषय में भगवती ऐसी ऊंची वात्सल्य-भावना रखती हैं।

कामन्दकी—यह कहानी लंबी है, इसे सुनाने का उपयुक्त अवसर यह नहीं है।

लवंगिका—फिर भी कुछ कहकर भगवती (हम पर) अनुग्रह करें।

कामन्दकी—तो सुनो। विदर्भ नरेश के अमात्य सभी प्रकार के श्रेष्ठ मनुष्यों में शिरोमणि के समान देवरात नाम के हैं। सम्पूर्ण जगतीतल में उनका पवित्र यश सुसम्मानित हो रहा है और तुम्हारे पिता जी भी सहपाठी होने के कारण उन्हें जिस प्रकार के और जैसे हैं—जानते हैं। और भी।

जिनकी उज्ज्वल कीर्ति सभी दिगन्तों में व्याप्त हो रही है, जो पुण्यदायी एवं प्रबल कार्यों के आश्रय हैं और सम्पूर्ण समृद्धियों के पात्र हैं, उनके समान अतुलित महिमाशाली एवं कल्याणों के प्रतीक पुरुष इस जग में किस प्रकार उत्पन्न होंगे? ॥९॥

मालती—(सहर्ष) भगवती ने अभी जिनका नाम लिया है, उन्हें हमारे पिता जी सर्वदा स्मरण किया करते हैं।

सर्वाङ्गिका—सखि, समं किल भगवत्या गुरुसकाशाद्विद्याधिगमः कृत इ
तत्कालवेदिनो मन्त्रयन्ते। (सहि, समं किल भअवदीए गुरुसआसादो विज्जाहिग
किदो त्ति तक्कालवेदिणो मन्तअन्दि।)

कामन्दकी—

तत उदयगिरेरिवैक एष स्फुरितगुणद्युतिसुन्दरः कलावान्।
इह जगति महोत्सवस्य हेतुर्नयनवतामुदियाय बालचन्द्रः॥१०

सर्वाङ्गिका—(अपवार्य) अपि नाम माधवो भवेत्। (अवि णाम माहवो हवे)

कामन्दकी—

असौ विद्याशाली शिशुरपि विनिर्गत्य भवना-
दिहायातः संप्रत्यविकलशरच्चन्द्रवदनः।
यदालोकस्थाने भवति पुरमुन्मादतरलैः
कटाक्षैर्नारीणां कुवलयितवातायनमिव॥११॥

तदत्र च बालसुहृदा मकरन्देन सह विद्यामान्वीक्षिकीमधीते। स एष माधवं नाम।

मालती—(सानन्दं जनान्तिकम्) सखि लवङ्गिके, श्रुत महाकुलप्रसूतं महाभाग इति। (सहि लवङ्गिए, सुदं महाउलप्पसूवो महाभाओ त्ति।)

---

लवंगिका—उस समय के जानने वाले ऐसा आपस में कहा करते हैं कि भगवती ने उन दोनों (देवरात और भूरिवसु) के साथ एक ही गुरु से विद्याध्ययन किया था

कामन्दकी—उदयाचल से उदित चन्द्रमा के समान उन्हीं (देवरात) से यह एक मात्र बालक उत्पन्न हुआ, जो अपने अनुपम गुणों की प्रकाशित कान्ति से मनोहर कला युक्त एव इस जगत में नेत्रवालों के लिए महोत्सव का कारण है॥१०॥

लवंगिका—(मालती के समीप धीरे-धीरे) यही बालक क्या माधव है?

कामन्दकी—शरद् ऋतु के पूर्ण चन्द्रमा के समान मनोहर मुखमण्डल वाले वही देवरात के पुत्र बाल्यावस्था में भी सभी विद्याओं में पारंगत होकर अपने भवन से निकल कर सम्प्रति यहाँ आये हुए है, जिनके दर्शन योग्य स्थानों में, सुन्दरियों के कामोन्माद के कारण चंचल कटाक्ष पातों से इस नगर के झरोखे नील कमल से युक्त की भाँति हो जाते हैं॥११॥

इस नगर में अपने बालसखा मकरन्द के संग वह न्यायशास्त्र का अध्ययन कर रहा है, और उसी का नाम माधव है।

मालती—(आनन्दपूर्वक केवल लवंगिका को सुनाकर) सखी लवंगिके! सुना तुमने कि वे महानुभाव महान कुल में भी उत्पन्न हुए हैं।

लवङ्गिका—(जनान्तिकम्) सखि, कुतो वा महोदधिं वर्जयित्वा पारिजातस्योद्गमः। (सहि, कुदो वा महोदहिं वज्जिअ पारिजाअस्स उग्गमो।)

(नेपथ्ये शङ्खध्वनिः)

कामन्दकी—अहो कालातिपातः। सम्प्रति हि—

क्षिपन्निद्रामुद्रां मदनकलहच्छेदसुभगा-
मुपात्तोत्कम्पानां विहगमिथुनानां प्रथमतः।
दधानः सौधानामलघुषु निकुञ्जेषु घनता-
मसौ संध्याशङ्खध्वनिरनिभृतः खे विचरति॥१२॥

वत्से, सुखं स्थीयताम्। (इत्युत्तिष्ठति।)

मालती—(अपवार्य) कथमुपहारीकृतास्मि राज्ञस्तातेन। राजाराधनं खलु तातस्य गुरुकम् न पुनर्मालती। (सास्रम्) हा तात, त्वमपि मम नामैवमिति सर्वथा जित भोगतृष्णया। (सानन्दम्) कथं महाकुलप्रसूतः स महाभागः। सुष्ठु भणितं प्रियसख्या कुतो वा महोदधिं वर्जयित्वा पारिजातस्योद्गम इति। अपि नाम तं पुनरपि प्रेक्षिष्ये। (कहं उहहारीकिदम्हि राइणो तादेण। राआराहणं क्खु तादस्स गुरुअं, ण उण मालदी। हा ताद, तुमं वि मह णाम एव्व त्ति सव्वहा जिदं भोअतिण्हाए। कहं महाउलप्पसूदो सो महाभाओ। सुठ्ठु भणिदं पिअसहीए कुदो वा महोअहिं वज्जिअ पारिजादस्स उग्गमो त्ति। अवि णाम तं उणो वि पक्खिस्सं।)

---

लवंगिका—(केवल मालती को सुनाते हुए) सखी! महासमुद्र को छोड़कर पारिजात की उत्पत्ति अन्यत्र कहाँ से संभव है?

(नेपथ्य में शंखध्वनि होती है।)

कामन्दकी—अहो! अधिक समय बीत गया। क्योंकि इस समय, सन्ध्याकाल की यह अमन्द शंखध्वनि प्रकट होकर, पहले ही से कंपित होनेवाले चक्रवाक दम्पती की सुरत लीला के अनन्तर आनेवाली मनोहर निद्रा की मुद्रा को दूर हटाती हुई, बड़े बड़े राज भवनों के भीतर (प्रतिध्वनित होने के कारण) निविड़ता (सघनता) को प्राप्त करके आकाश में फैलती जा रही है॥१२॥

बेटी! सुखपूर्वक रहो। (ऐसा कहकर उठती है।)

मालती—(केवल लवंगिका से) पिता जी ने मुझे राजा को उपहार-स्वरूप कैसे दे दिया। राजा को प्रसन्न करना ही पिता जी के लिए अधिक है, मालती कुछ नहीं है। (आँसू बहाती हुई) हाय पिता जी! आप भी हमारे लिए इस प्रकार (निष्कृप) हो गये हैं, जगत में भोग की लिप्सा ही सब प्रकार से विजयिनी

लवङ्गिका—अवलोकिते, इत एतेन सञ्चवनेनावतरावः। (अवलोइद, इदो एदिणा संजवणेण ओदरम्ह।)

कामन्दकी—(अपवार्य) अवलोकिते, साधु सम्प्रति मया तटस्थयैव मालती प्रति निसृष्टार्थदूत्यस्य लघूकृतो भारः। कुतः—

यदेऽन्यस्मिन्दोषः पितरि विचिकित्सा च जनिता
पुरावृत्तोद्गारैरपि च कथिता कार्यपदवी।
स्तुतं माहाभाग्यं यदभिजनतो यच्च गुणतः
प्रसङ्गाद्वत्सस्येत्यथ खलु विधेयः परिचयः॥१३॥

(इति निष्क्रान्ताः सर्वे)

इति महाकविश्रीभवभूतिविरचिते मालतीमाधवे धवलगृहो नामा द्वितीयोऽङ्कः ॥२॥

---

होती है। (आनन्द के साथ) वे महानुभाव कैसे महान कुल में भी उत्पन्न हुए हैं? ठीक ही कहा है मेरी प्रिय सखी ने कि महासमुद्र को छोड़कर पारिजात की उत्पत्ति अन्यत्र कहाँ से संभव है। क्या मैं उन्हें फिर से देख सकूँगी।

लवंगिका—अवलोकिते! इधर आओ, इस सीढ़ी से हम दोनों नीचे उतरेंगी।

कामन्दकी—(केवल अवलोकिता को सुनाते हुए) अवलोकिते! इस समय तो मैंने बिल्कुल तटस्थ होकर मालती के प्रति निसृष्टार्थ दूती के कर्तव्य का भार हल्का कर दिया है। क्योंकि—

दूसरे वर (नन्दन) में दोष, और पिता (भूरिवसु) की नीयत में सन्देह उत्पन्न कर दिया है। प्राचीन उपाख्यानों को भी सुनाकर कार्य की पद्धति बतला दी है। प्रसंग के अनुसार वात्सल्य-भाजन (माधव) के उच्चकुल और सद्गुणों के कारण प्राप्त होनेवाली महानुभाविता की भी प्रशंसा कर दी है। अब इसके बाद तो इन दोनों का केवल परिचय (सम्मिलन) कराना बाकी रह गया है॥१३॥

महाकवि भवभूति रचित मालतीमाधव नाटक में धवलगृह नामक
दूसरा अंक समाप्त ॥२॥

# तृतीयोऽङ्कः

(ततः प्रविशति बुद्धरक्षिता)

बुद्धरक्षिता—(परिक्रम्य आकाशे) अवलोकिते, अपि जानासि क्व भगवती। (अवलोइदे, अवि जाणासि कहिं भअवदी।)

अवलोकिता—(प्रविश्य) बुद्धरक्षिते, किं प्रमुग्धासि। यः कोऽपि कालो भगवत्याः पिण्डपारणवेला विसृज्य मालतीमनुवर्तमानायाः। (बुद्धरक्खिदे, किं पमुद्धासि। जो कोवि कालो भअवदीए पिण्डपारणवेलं विसज्जिअ मालदीं अणुवट्टमाणाए।)

बुद्धरक्षिता—हु, त्व पुन क्व प्रस्थितासि। (हुं, तुमं उण कहिं पत्थिदासि।)

अवलोकिता—अहं खलु भगवत्या माधवसकाशमनुप्रेषिता। संदिष्ट च तस्य शंकरपुरसवन्धि कुसुमाकरोद्यानं गत्वा कुञ्जनिकुञ्जपर्यन्तरक्ताशोकगहने तिष्ठेति। गतश्च तत्र माधवः। (अहं क्खु भअवदीए माहवसआसं अणुप्पेसिदा। संदिट्ठं अ तस्स संकरउरसंबन्धि कुसुमाअरुज्जाणं गदुअ कुञ्जणिउञ्जपेरन्तर-त्तासोअगहणे चिट्ठेत्ति। गदो अ तत्थ माहवो।)

बुद्धरक्षिता—अवलोकिते, किमिति माधवस्तत्रानुप्रेषितः। (अवलोइदे किं ति माहवो तत्थ अणुप्पेसिदो।)

अवलोकिता—अद्य कृष्णचतुर्दशीति जनन्या समं मालती शंकरपुरं गमिष्यति।

---

## तृतीय अंक

(तदनन्तर बुद्धरक्षिता प्रवेश करती है। )

बुद्धरक्षिता—(घूमती हुई। आकाश की ओर देखकर) अवलोकिते! क्या जानती हो भगवती कहाँ हैं?

अवलोकिता—(प्रवेश करके) बुद्धरक्षिते! क्यों तुम अज्ञ बन गयी हो? भोजन के लिये निर्दिष्ट समय को छोड़कर भगवती कामन्दकी का कितना समय मालती का अनुसरण करने में बीत जाता है।

बुद्धरक्षिता—हूँ, तो तुम कहाँ चल पड़ी हो।

अवलोकिता—भगवती ने मुझे माधव के समीप भेजा है। और उन्हें यह सन्देश दिया है कि—तुम शिव के मन्दिर से सम्बद्ध कुसुमाकर के उद्यान में जाकर माला के पुष्पों की लता आदि से आच्छादित स्थान के मध्य भाग में लाल अशोक के वृक्षों के वन में ठहरो। माधव वहीं गये हुए हैं।

बुद्धरक्षिता—अवलोकिते! माधव वहाँ किस लिए भेजे गये हैं।

अवलोकिता—आज कृष्ण पक्ष की चतुर्दशी तिथि है, इस कारण अपनी माता

तत एवं किल सौभाग्यं वर्धत इति देवताऽऽराधननिमित्त स्वहस्तकुसुमावचयमुद्दिश्य लवङ्गिकाद्वितीया मालती तदेव कुसुमाकरोद्यानमानेष्यति। ततोऽन्योन्यदर्शनं भविष्यतीति। त्वं पुन क्व प्रस्थितासि। (अज्ज किसणचउद्दसित्ति जणणीए समं मालदी सङ्करउरं गमिस्सदि। तदो एव्वं किल सोहग्गं वड्ढदि त्ति देवदाराहणणिमित्त सहत्थकुसुमावचअ उद्दिसिअ लवङ्गिआदुदीअ मालदी त एव्व कुसुमाअरुज्जाणं आणइस्सदि। तदो अण्णोण्णदंसण हविस्सदि त्ति। तुमं उण कहिं पत्थिदा त्ति ।)

बुद्धरक्षिता—अह खलु शङ्करपुरमेव प्रस्थितया प्रियसख्या मदयन्तिकया आमन्त्रिता। अतो भगवत्या पादवन्दन कृत्वा तत्रैव गच्छामि। (अहं क्खु सङ्करउर जेव्व पत्थिदाए पिअसहीए मदअन्तिआए आमन्तिदा। अदो भअवदीए पादवन्दणं करुअ तहिं जेव्व गच्छामि।)

अवलोकिता—त्वं खलु भगवत्या यस्मिन्प्रयोजने नियुक्ता तत्र को वृत्तान्तः। (तुमं क्खु भअवदीए जस्सि पओअणे णिउत्ता तत्थ को वुत्तन्तो।)

बुद्धरक्षिता—मया खलु भगवत्या समादेशेन तासु तासु विस्रम्भकथास्वीदृशस्तादृश इति मकरन्दस्योपरि प्रियसख्या मदयन्तिकाया परोक्षानुरागस्तथा दूरमारोपितो यथैवमस्या मनोरथोऽपि नाम त पश्यामीति। (मए क्खु भअवदीए समादेसेण तासु विस्सम्भकहासु ईरिसो तारिसो त्ति मअरन्दस्स उवरि पिअसहीए मदअन्तिआए परोक्खाणुराओ तहा दूरं आरोविदो जहा से मणोरहो अवि णाम त पेक्खामि त्ति।)

---

के साथ मालती शिव के मन्दिर में जायगी। तदनन्तर—ऐसा करने से सुख-सौभाग्य की वृद्धि होती है—इसलिए देवाराधन के निमित्त अपने ही हाथों से पुष्पचयन करने का उद्देश्य लेकर लवंगिका के साथ मालती को उसी कुसुमाकर उद्यान में भगवती ले जायगी। तब उन दोनों (मालती और माधव) का परस्पर दर्शन होगा। तुम फिर कहाँ चल पड़ी हो?

बुद्धरक्षिता—मुझे तो शिव मन्दिर को ही जानेवाली प्रियसखी मदयन्तिका ने बुलाया है। अतः भगवती का चरण-वन्दन कर मैं वहीं जा रही हूँ।

अवलोकिता—तुम्हें भगवती ने जिस कार्य में नियुक्त किया था, उसका क्या समाचार है?

बुद्धरक्षिता—भगवती के आदेश में मैंने ऐसे-ऐसे मनोहर प्रेम-प्रसंगों में मकरन्द ऐसे हैं, वैसे हैं—इस प्रकार कह-कह कर मकरन्द के ऊपर प्रियसखी मदयन्तिका के छिपे हुए अनुराग को इस प्रकार से दूर तक जमा दिया है कि—मैं उन्हें देखना चाहती हूँ—ऐसी मदयन्तिका की इच्छा हो गयी है।

अवलोकिता—साधु बुद्धरक्षिते साधु। एहि गच्छावः। (साहु बुद्धरक्खिदे, साहु। एहि गच्छम्ह)।

(इति निष्क्रान्ते)

प्रवेशकः।

—०—

(प्रविश्य)

कामन्दकी—

तथा विनयनम्राऽपि मया मालत्युपायतः।
नीता कतिपयाहोभिः सखीविस्रम्भसेव्यताम् ॥१॥

संप्रति हि—

व्रजति विरहे वैचित्यं नः प्रसीदति संनिधौ,
रहसि रमते प्रीत्या वाचं ददात्यनुवर्तते।
गमनसमये कण्ठे लग्ना निरुध्य निरुध्य मां
सपदि शपथैः प्रत्यावृत्ति प्रणम्य च याचते ॥२॥

इदं च तत्र साधीयः प्रत्याशानिबन्धनम्।

शाकुन्तलादीनितिहासवादान् प्रस्तावितानन्यपरैर्वचोभिः।
श्रुत्वा मदुत्सङ्गनिवेशिताङ्गी चिराय चिन्तास्तिमितत्वमेति ॥३॥

---

अवलोकिता—वाह बुद्धरक्षिते। शाबास। आओ चलें।

(दोनों निकलती हैं।)

(प्रवेशक समाप्त)

—०—

(प्रवेश कर)

कामन्दकी—उस प्रकार (प्राचीन परम्पराओं एवं मर्यादा रक्षा के प्रति अडिग आस्था रखनेवाली) विनय से विनम्र होने पर भी मालती को मैं ने अनेक उपयुक्त उपायों द्वारा कुछ ही दिनों के भीतर विश्वस्त सखियों के समान हमारे प्रति व्यवहार करने के योग्य बना डाला है॥१॥

क्योंकि इस समय

मालती हमारे वियोग से दु:खी होती है और समीप रहने से सुप्रसन्न होती है, एकान्त में क्रीडा-रत होती है, प्रेम से बोलती है, मेरा अनुसरण करती है, जब मैं कहीं जाने लगती हूँ तो गले में लगकर मुझे बारबार रोककर प्रणाम करके तथा शपथ दिलाकर शीघ्र ही वापस लौटने की प्रार्थना करती है॥२॥

यह तो हमारी आशा के सफल होने का सुदृढ कारण (दिखाई पड़ता) है। अन्यान्य प्रसंगों में हमारे द्वारा प्रस्तावित शकुन्तला-दुष्यन्त आदि की पुरानी कथाएँ सुनकर मालती हमारी गोंद में अपने अंगों को रखकर बहुत समय तक चिन्ता से स्तब्ध होकर पड़ी रहती है॥३॥

क्रमावः। (सहि, एसो क्खु महुरमहुरसाद्दमञ्जरिकवलणकेलिकलकोइलउलकोलाहलाउलिदसहआररसिहरड्डोणचञ्चरीअणिअरवइअरद्दलिददलकरालचम्पआहिवासमणोहरो मरालजहणपरिणाहुव्वहणमन्थरोरुभरवितंठुलवखलिदचलणसंवलणोवणीदसेअसीअरसुहाविन्दुज्जलमुद्धमुहचन्दचन्दणाअमाणसीअलफसो तुमं परिस्सअदि कुसुमाअरुज्जाणमारुदो। ता पिअसहि, इदो परिक्कमावो।)

(परिक्रम्य प्रविशतः)

(ततः प्रविशति माधवः)

माधवः—हन्त, परागता भगवती। इयं हि मम—

आविर्भवन्ती प्रथमं प्रियायाः सोच्छ्वासमन्तःकरणं करोति।
निदाघसंतप्तशिखण्डियूनो वृष्टेः पुरस्तादचिरप्रभेव ॥४॥

दिष्ट्या लवङ्गिकाद्वितीया मालत्यपि—

---

पुष्पों की कलियों को विमर्दित करने लगी हैं, और उनकी पखुडियाँ ऊंची-नीची हो गयी हैं। उनकी भीनी-भीनी सुगन्ध से इस कुसुमाकर उद्यान की वायु अतीव मादक हो उठी है। और इधर कोमल, स्थूल और विशाल दोनों नितम्बों के भार को धारण करने से, भारी होने के कारण मन्द-मन्द और इधर-उधर के पाद-विक्षेप के परिश्रम से अमृत की बूँदों के समान पसीने की बूंदें सर्वत्र उत्पन्न होकर तुम्हारे मुखचन्द्र को और भी शुभ्र और मनोहर बनाए दे रही हैं। ऐसे तुम्हारे मुख-मण्डल को इस कुसुमाकरोद्यान के वायु का सस्पर्श चन्दन की भांति शीतलता का अनुभव करा रहा है और तुम्हारा आलिंगन कर रहा है। तो सखी! आओ इस स्थल पर हम भ्रमण करें।

(घूमते हुए प्रवेश करती हैं।)

(तदनन्तर माधव प्रवेश करता है।)

माधव—(प्रसन्नता के स्वर में) बहुत अच्छा। भगवती (कामन्दकी) उपस्थित हैं। क्योंकि यह तो मेरी—

प्रियतमा (मालती) के पहले ही प्रकट हो कर यह (कामन्दकी), ग्रीष्म में सन्तप्त तरुण मयूर के अन्तःकरण को जिस प्रकार वर्षा के पहले चमकनेवाली बिजली सजीव बना देती है उसी प्रकार मेरे अन्तःकरण को आनन्दपूर्ण बना दे रही हैं॥४॥

सौभाग्य से लवंगिका के साथ मालती भी,

आश्चर्यमुत्पलदृशो वदनामलेन्दु-
सांनिध्यतो मम मुहुर्जडिमानमेत्य।
जात्येन चन्द्रमणिनेव महीधरस्य
संधार्यते द्रवमयो मनसा विकारः॥५॥

संप्रतिरमणीयतरा मालती—

ज्वलयति मनोभवाग्निं मदयति हृदयं कृतार्थयति चक्षुः।
परिमृदितचम्पकावलिविलासलुलितालसैरङ्गैः ॥६॥

मालती—सखि, अमुष्मिन्कुब्जकनिकुञ्जे कुसुमान्यवचिनुवः। (सहि, इमस्सिं कुज्जअणिउञ्जे कुसुमाइं अवचिणुम्ह।)

माधवः—

प्रथमप्रियावचनसंश्रवस्फुर-
त्पुलकेन संप्रति मयाऽवलम्ब्यते।
घनराजिनूतनपयःसमुक्षण-
क्षणबद्धकुड्मलकदम्बडम्बरः॥७॥

---

कमलनयना मालती के निर्मल चन्द्रमुख की समीपता के कारण मेरे चित्त के द्वारा, पर्वत के विशुद्ध जाति में उत्पन्न चन्द्रकान्तमणि के समान बारम्बार जड़ता (अज्ञान एवं द्रवत्व) प्राप्त कर तरलतामय विकार धारण किया जा रहा है—यह आश्चर्य है। (अर्थात् जिस प्रकार चन्द्रोदय होने पर चन्द्रकान्त मणि द्रवित होने लगती है, उसी प्रकार मालती के मुख-चन्द्र के उदय होने से मेरा चित्त भी तरल होता जा रहा है।)

इस समय तो मालती और भी सुन्दर (दिखाई पड रही) है।

परिमर्दित चम्पक के पुष्प से निर्मित माला के समान सुशोभित, मदन पीड़ित और आलस्ययुक्त अंगों से वह हमारी कामाग्नि को प्रदीप्त कर रही है, हृदय (चित्त) को मतवाला बना रही है और नेत्रों को कृतार्थ कर रही है॥६॥

मालती—सखी! आओ हम दोनों इसी कुब्जक वृक्षों के निकुंज में पुष्प चयन करें।

माधव—प्रियतमा के (इस) प्रथम वाक्य के सुनने पर मुझे रोमांच हो आया है, और मैं मेघपंक्तियों के नूतन जल के सींचने के समय मुकुल धारण करनेवाले कदम्ब के वृक्ष की समानता धारण कर रहा हूँ॥७॥

लवङ्गिका—सखि, एवं कुर्वः। (सहि एव्व करेम्ह।)

(पुष्पावचयं नाटयतः)

माधवः—अपरिमेयाश्चर्यमाचार्यकं भगवत्याः।

मालती—सखि तेनेतोऽप्यपरिस्मिन्नवचिनुव.। (सहि, तेण इदो वि अवरस्सिं अवचिणुम्ह)।

कामन्दकी—(मालतीं परिष्वज्य) अयि, विरम विरम। निःसहा जातासि।

स्खलयति वचनं ते संश्रयत्यङ्गमङ्गं
जनयति मुखचन्द्रोद्भासिनः स्वेदबिन्दून्।
मुकुलयति च नेत्रे सर्वथा सुभ्रु खेद-
स्त्वयि विलसति तुल्यं वल्लभालोकनेन॥८॥

(मालती लज्जां नाटयति)

लवङ्गिका—शोभनं भगवत्याज्ञप्तम्। (सोहणं भअवदीए आणत्तं।)

माधवः—हृदयङ्गमः परिहासः।

कामन्दकी—तदास्यताम्। किंचिदाख्येयमाख्यातुकामाऽस्मि।

(सर्वा उपविशन्ति)

---

लवंगिका—सखी! ऐसा ही करें।

(दोनों पुष्प-चयन का नाट्य करती है।)

माधव—भगवती कामन्दकी का आचार्यत्व आश्चर्यजनक है।

मालती—सखी! अब पुष्पचयन यहाँ से अन्यत्र चलकर करें।

कामन्दकी—(मालती का आलिंगन कर) अरे! छोड़ो पुष्पचयन। छोड़ो। बहुत थक गयी हो।

हे सुन्दर भौंहो वाली! इस पुष्पचयन के परिश्रम ने तुम्हारी वाणी में स्खलन पैदा कर दिया है, सभी अंग-प्रत्यंगों को थका दिया है, मुखचन्द्र को सुन्दर बनाने वाले पसीने की बूँदें पैदा कर दी हैं एवं दोनों नेत्रों को मुकुलित बना दिया है। अतएव यह तो तुम्हारे लिए प्रियतम दर्शन के समान व्यवहार करनेवाला बन गया है॥८॥

(मालती लज्जा का नाट्य करती है।)

लवंगिका—भगवती ने ठीक ही कहा है।

माधव—यह मनोहर हास-परिहास (चल रहा) है।

कामन्दकी—तो बैठो। कुछ करने योग्य बातें कहना चाहती हूँ।

(सब बैठ जाती है।)

कामन्दकी—(मालत्याश्चिबुकमुन्नमय्य) शृणु चित्रमिदं शुभगे!

मालती—अवहितास्मि। (अवहिदम्हि)।

कामन्दकी—अस्ति तावदेकदा प्रसङ्गतः कथित एव मया माधवाभिधानः कुमारः, यस्त्वमिव मामकीनस्य मनसो द्वितीयं बन्धनम्।

लवङ्गिका—स्मराम। (सुमराओ)।

कामन्दकी—स खलु मदनोद्यानयात्रादिवसात्प्रभृति दुर्मनायमानः परवानिव शरीरोपतापेन। तथाहि—

> यदिन्दावानन्दं प्रणयिनि जने वा न भजते
> व्यनक्त्यन्तस्तापं तदयमतिधीरोऽपि विषमम्।
> प्रियङ्गुश्यामाङ्गप्रकृतिरपि चापाण्डु मधुरं
> वपुः क्षामं क्षामं वहति रमणीयश्च भवति॥९॥

लवङ्गिका—एतदपि तस्मिन्नवसरे भगवतीं त्वरयन्त्यावलोकितयोदीरितमासीत्। यथाऽस्वस्थशरीरो माधव इति। (एदं वि तस्सिं अवसरे भअवदिं तुवरावन्तीए अवलोइदाए उदीरिदं आसि। जह अस्सत्थसरीरो माहवो त्ति।)

---

कामन्दकी—(मालती की ठोढी को ऊपर उठाकर) हे सुन्दरी! यह एक विचित्र बात सुनो।

मालती—सावधान हूँ।

कामन्दकी—एक दिन बातचीत के प्रसंग में मैंने माधव नामक एक कुमार की कथा बतलायी थी, जो तुम्हारे ही समान मेरे मन के लिए द्वितीय बन्धन के समान है।

लवंगिका—हमें स्मरण है।

कामन्दकी—वह मदनोद्यान के यात्रा महोत्सव के दिन से ही अतीव दुःखी चित्त होकर शरीर के सन्ताप से पराधीन-सा हो गया है। क्योंकि—

वह चन्द्रमा में अथवा अपने प्रणयी जन में आनन्द की प्राप्ति नहीं करता और उसी कारण से अत्यन्त धीर-गम्भीर स्वभाव का हो कर भी इस प्रकार का अतीव अन्तस्ताप प्रकट करता है। प्रियंगु की लता के समान श्यामल वर्ण की देह-कान्ति से युक्त होकर भी किंचित् पीले एवं श्वेत रंग का होकर मनोहर एवं शनैः शनैः क्षीण होता हुआ रमणीय शरीर धारण करता है॥९॥

लवंगिका—उस अवसर पर भगवती को शीघ्रता कराती हुई अवलोकिता ने यह भी तो कहा था कि माधव का शरीर अस्वस्थ है।

कामन्दकी—यावदहमश्रृणवं मालत्येवास्य मन्मथोन्मादहेतुरिति। ममापि स एव निश्चय.। कुतः—

अनुभवं वदनेन्दुरुपागमन्नियतमेव यदस्य महात्मनः।
क्षुभितमुत्कलिकातरलं मनः पय इव स्तिमितस्य महोदधेः॥१०॥

माधवः—अहो उपन्यासशुद्धिः। अहो मम च महत्त्वारोपणे यत्नः। अथवा—

शास्त्रे प्रतिष्ठा, सहजश्च बोधः
प्रागल्भ्यमभ्यस्तगुणा च वाणी।
कालानुरोधः, प्रतिभानवत्त्व-
मेते गुणाः कामदुधाः क्रियासु॥११॥

कामन्दकी—यतस्तेन जीवितादुद्विजमानेन दुष्करमपि न किंचिन्न क्रियते। तथा हि—

धत्ते चक्षुर्मुकुलिनि रणत्कोकिले बालचूते
मार्गे गात्रं क्षिपति बकुलामोदगर्भस्य वायोः।

---

कामन्दकी—मैंने तो सुना है कि मालती ही माधव के इस कामोन्माद का कारण है। और हमारी भी तो यही धारणा है। क्योंकि—

यह चन्द्रमुख निश्चय ही उस महापुरुष (माधव) को प्रत्यक्ष गोचर हुआ है, जिससे तरंग रहित शान्त समुद्र के चन्द्रमा के दर्शन से चंचल तरंगों से युक्त जल राशि के समान उसका चित्त उत्कण्ठाओं से अतीव चवल होकर धैर्य-रहित बन गया है॥१०॥

माधव—अहो। यह निर्दोष वाक्य-विन्यास की विचित्रता है। हमारी महिमा की स्थापना का भी प्रयास किया गया है। आश्चर्य है। अथवा

शास्त्रों में निष्ठा, स्वाभाविक बुद्धि का विकास, प्रगल्भता, सभी गुणों से युक्त वाणी, धर्म के अनुकूल समय-कुसमय का ज्ञान और प्रतिभा की नूतनता -ये सब के सब गुण सम्पूर्ण कार्यों मे अभिलाषाओं की पूर्ति करनेवाले होते हैं॥११॥

कामन्दकी—इसीलिए माधव अपने जीवन से भयभीत होकर कोई दुष्कर कर्म नही करता है—ऐसी बात भी नहीं है। क्योंकि—

कलियों से समन्वित, शब्द करते हुए कोकिलों से युक्त नूतन आम के वृक्ष मे (मृत्यु के लिए) बारम्बार दृष्टिपात करता है, मौलसिरी के पुष्पों की सुगन्धि से सुवासित वायु के मार्ग मे मरने के लिए अनेक बार अपने शरीर को प्रेरित करता है,

दावप्रेम्णा सरसबिसिनीपत्रमात्रोत्तरीय-
स्ताम्यन्मूर्तिः श्रयति बहुशो मृत्यवे चन्द्रपादान् ॥१२॥

मालती—(स्वगतम्) एवं दुष्करं करोति सः। (एव्वं दुक्करं करेदि सो।)

कामन्दकी—तदेवं प्रकृत्या सुकुमारः कुमारः कदाचिदप्यन्यथापरिक्लिष्ट-पूर्वस्तपस्वी। यतः शक्यमनेन मरणमप्यनुभवितुम्।

मालती—सखि, आत्मनः कारणान्मर्त्यलोकालङ्कारभूतस्य तस्य किमप्याशङ्कमाना भूताविष्टेव न जानामि किं प्रतिपद्यत इति। (सहि, अत्तणो कालणादो मच्चलोआलङ्कारभूदस्स तस्स किं वि आसंकमाणा भूदाविट्ठा विअ ण आणामि किं पडिवज्जदि त्ति।)

माधवः—दिष्ट्या, अनुकम्पितोऽस्मि भगवत्या।

लवङ्गिका—भगवत्यैववादिनीत्याख्यायते। अस्माकमपि भर्तृदारिका भवनासन्नरथ्यामुखमुहूर्तमण्डनस्य तस्यैव बहुशोऽनुभूतदर्शना भूत्वा रविकराश्लिष्टमुग्धकमलिनीकन्दसुन्दरावयवशोभाविभावितानङ्गवेदनाव्यतिकररमणीयापि परिजनं दूनयति। नाभिनन्दति कलाक्रीडाः। केवलं म्लायमानकान्तहस्तपर्यस्त-

---

मात्र गीले कमलिनी के पत्र को अपने सन्तप्त शरीर पर उत्तरीय के रूप में धारण किये हुए (माधव) मलिन शरीर होकर दावाग्नि की प्रतीति से मृत्यु के लिए चन्द्रमा की किरणों का वारम्बार आश्रय ग्रहण करता है॥१२॥

मालती—(अपने आप) वह इस प्रकार के कठिन कार्य कर रहा है।

कामन्दकी—स्वभाव से ही कोमल वह कुमार (माधव) कभी अन्यत्र किसी प्रसंग में इस प्रकार का क्लेशानुभव न करने के कारण अनुकम्पा का पात्र है। क्योंकि इस प्रकार मृत्यु का भी अनुभव कर सकता है।

मालती—अपने लिए मनुष्य-लोक के शृंगार स्वरूप उनको (माधव को) किस प्रकार की विपत्ति सहनी पड़ रही है—इस आशंका से भूत के आवेश से युक्त की भांति मैं यह नहीं जान पा रही हूं कि किस प्रकार का उत्तर दिया जाय।

माधव—सौभाग्य से भगवती ने मुझ पर अनुकम्पा की है।

लवंगिका—भगवती ने (माधव की) ऐसी अवस्था की चर्चा की है, इसलिए मैं भी कुछ (अपनी सखी की अवस्था के सम्बन्ध में) कह रही हूँ। हमारे स्वामी की कन्या भी राजभवन के समीपवर्ती मार्ग के अग्र भाग को कुछ क्षणों तक अलंकृत करने वाले उन्हीं (माधव) को वारम्बार देखती हुई प्रभाकर की किरणों के स्पर्श से सुन्दर कमलिनी के मूल मृणाल दण्ड की भांति कुम्हलाए हुए अपने अंग-अंग द्वारा अपनी काम-पीड़ा को प्रकट करती हैं, और उस (काम वेदना की) दशा में

-गण्डमण्डला दिवसानानमयति । अपि च विकसितारविन्दमकरन्दविष्यन्दसुन्दरेण दरदलितकुन्दमाकन्दमधुबिन्दुसंदोहवाहिना भवनोद्यानपर्यन्तमारुतेनोत्ताम्यति । अन्यच्च यत प्रभृति तस्मिन्दिवसे निजमहोत्सवाभ्युदयदर्शनार्थं प्रतिपन्नरूपस्य कामकाननालङ्कारिणो भगवतो मन्मथस्येव तस्य माधवस्य विविधविभ्रमानुरागानुबन्धमहर्घीकृतयौवनारम्भमन्योन्यदृष्टिविनिपातवञ्चनावसरत्वरितचित्तत्वरत्कौतूहलोल्लसितसाध्वसस्तम्भमन्थरावयवप्रतिलग्नस्वेदपुलककम्पानन्दितसखीजनं परस्परावलोकनसुखं समासादितम् । ततः प्रभृति सविशेषदुःसहामासविजृम्भणोद्दामदारुणं दशापरिणाममनुभवन्ती मुहूर्तसंप्राप्तपूर्णचन्द्रोदयेव बालकमलिनी परिम्लायति । तथापि मुहूर्तमात्रहृदयविनिहितनिर्मोदमाणवल्लभसमागमा निर्भरसलिलासारसिच्यमानेव मेदिनी शीतलायत इति जानामि । येन प्रस्फुरितरदनच्छदोज्ज्वलदन्तमौक्तिकखचितकान्तिमविशेषशोभितं निरन्तरो-

---

विशेष रूप से रमणीय प्रतीत होने पर भी अपनी बढ़ती हुई विषम अवस्था से मेरे सदृष परिजनों को चिन्तित करती है। क्रीडा या कला में तो उसका मन रमता ही नहीं है। केवल थके हुए ग्लानियुक्त सुन्दर हथेली पर कपोल को रखे हुए दिनों को बिता देती है। और भी, खिले हुए अरविन्द के मकरन्द से नव विकसित, कुछ खिले हुए कुन्द और रसाल के बौरों के रस-बिन्दु-समूह को धारण करने वाले, एवं निजी भवन के उद्यान की सीमा भूमि में संचरण करने वाले वायु के सस्पर्श से भी यह उत्कण्ठित हो उठती है। और भी, उस (महोत्सव की) यात्रा के दिन, मदनोद्यान में निज महोत्सव की शोभा-सुषमा देखने की इच्छा से पधारे हुए अंग-धारी अनंग (कामदेव) भगवान के समान, उस काम-कानन के अलंकार स्वरूप उन माधव के अनेक प्रकार के विलासों द्वारा चित्त को अपहृत कर अनुरूप अनुराग से भरी चेष्टाओं द्वारा अभिनव यौवन को और अधिक मूल्यवान बना देता है। और ऐसा दर्शन जिसे अंगीकार करने की बलवती लालसा होने पर भी यथेच्छ न मिल सकने के कारण उतावला चित्त उत्कण्ठा से बावला बन जाता है। ऐसे शुभ दर्शन का पारस्परिक सुख इसे ज्यों प्राप्त हुआ कि पलकों का भांजना भी बुरा लगता था। चित्त ऐसा विह्वल हो गया था कि इसके हाथ पैर चलते ही नहीं थे। पसीने से श्लथ-विश्लथ हो गयी थी और पुलकावली खड़ी हो गयी थी। इनके इस प्रकार के पारस्परिक-प्रेम-प्रदर्शन से हम सखियों को उस समय तो बहुत ही सुख मिला था। किन्तु उसी क्षण से इसका दुःख असह्य हो उठा है। शरीर की जलन दिन-दिन बढ़ती जा रही है। अब इसकी दशा शोचनीय हो उठी है। मुहूर्त मात्र के लिए पूर्ण चन्द्रोदय का दर्शन प्राप्त करने वाली बाल-कमलिनी के समान कुछ-कुछ क्षीणकान्ति हो गयी है। फिर भी स्वल्प काल मात्र के लिए ही

ल्लसितपुलकपक्ष्मलकपोलघूर्णमानसततानन्दबाष्पस्तबकमीषद्विषमनिष्पन्दमन्थरतारोत्तानमसृणमुकुलायमाननेत्रनीलोत्पलमविरलोद्भिन्नस्वेदजलबिन्दुसुन्दरनिटिलचन्द्रलेखामनोहरं मुग्धमुखपुण्डरीकमुद्वहन्ती विदग्धसहचरीचित्तसंशयितकौमारभावा भवति। किं च उद्दामशशिमयूखनिकुरुम्बचुम्बितप्रवृत्तनिष्यन्दचन्द्रमणिहारधारिणी प्रचुरकर्पूरसविशेषशिशिरचन्दनरसच्छटासारनिकरदन्तुरितबालकदलीपत्रशयना पादसंवाहनादिव्यापारत्वरमाणसहचरीसार्थविरचितोपनीतकमलिनीदलसलिलार्द्रतालवृन्तोत्क्षिप्तेव रजनीं गमयति। कथमप्युपलब्धनिद्रासुखा प्रक्षालितपादपल्लवार्द्रमलपिण्डालक्तकरसा श्वन्यरायमानपीवरोरुमूलपादवं-विसवादितनीवीग्रन्थनोत्क्षुभ्यमानहृदयान्तरोत्तरङ्गानि स्वामिविषमर्मोच्छ्वसत्स्थूलकणकमल्पमोवरोरपरिविक्षिप्तवेपमानभुजलतावेष्टनबन्धना झटिति प्रति-

---

अपने हृदय में कान्त-समागम का अनुभव कर प्रिय पावस की अतिशय वृष्टिधारा से सिक्त धरती की भांति इसका शरीर शीतल हो जाता है—मैं ऐसा जानती हूँ। कभी-कभी तो इसके मनोहर अधर पल्लव फड़कने लगते हैं जिनमें मुक्तावली के समान समुज्ज्वल दांतों की पंक्तियों के खुल जाने से इसकी कान्ति और भी बढ़ जाती है। निरन्तर के उल्लास से इसके सुन्दर कपोल-द्वय पुलकावली युक्त हो उठते हैं और आनन्द के आंसू उन पर ढुलक पड़ते हैं। नीले कमल के समान सरस, उन्नत, कोमल, मुकुलों के समान मनोहर अधखुले नेत्रों के चारु चंचल तारे जहाँ के तहाँ निश्चल-से रह जाते हैं। नूतन चन्द्रमा की कला के समान इसका मनोमोहक ललाट-स्थल, सघन श्रम-सीकर (पसीने) के कणों के झलकने से और भी रमणीय हो उठता है और इस प्रकार जब इसका भोला भाला मुख कमल की शोभा धारण करता है तो इसकी छवि को देखकर निपुण सखियों को इसके कौमार्य पर संशय हो उठता है। और भी, चन्द्रमा की किरणों के सघन समूह के सम्पर्क होने से द्रवयुक्त चन्द्रकान्त मणि की माला को धारण कर प्रचुर कर्पूर आदि से विशेष रूप से शीतल किए गये चन्दन के रस-धार-समूह से लेप कर ऊंचे नीचे कोमल कदली के पत्तों पर लेटी हुई या तड़प-तड़प कर अति कष्ट में रात बिताती है। नींद तो अभी ही नहीं यद्यपि सखियाँ इसके चरणों के संवाहन (मर्दन) आदि कार्यों में शीघ्रता करती हैं और गीले कमलिनी के पत्तों का पंखा बना कर हवा करती हैं। ऐसी दशा में यदि हमारी स्वामिकन्या किसी प्रकार थोड़ी-सी निद्रा का सुख पा जाती है तो तत्काल ही स्वप्न में प्रियतम के समागम का सुखानुभव करने के कारण इसका सारा शरीर पसीने से डूब जाता है, जिससे चरणों में लगा हुआ लाक्षारस (महावर) भी बहने लगता है। स्थूल जघन स्पर्श

बोधवेलाविसर्जितापाङ्गदृष्टिविनिपातविज्ञानशून्यशयनीयसंजातमोहमीलल्लोचना ससंभ्रमसखीजनप्रयत्नप्रतिपन्नमूर्च्छाविच्छेदसमयसंगलितदीर्घनिःश्वासजनितजीविताशा किंकर्तव्यतामूढ प्रथमं प्रार्थितनिजजीवितावसान दुर्वारदैवदुर्विलसितोपालम्भमात्रव्यापार सखीजनं करोति। तत्पश्यतु भगवती। एषु तावल्लावण्यभूयिष्ठनिर्माणपरिपेशलेष्वङ्गेषु दारुणविजृम्भितस्य कियच्चिरं कुशलावसानता मन्मथस्य। कथं चेमानि रमणकेलिकलहोपरागपल्लवितकेरलीकपोलकोमलकोमलोद्भिन्नविमलचन्द्रिकोद्दामदलिततिमिरावरणानि विभावरीमुखानि। इमे चोल्लसितदुग्धधारापूरधवलोज्ज्वलज्योत्स्नाप्रक्षालितनभोङ्गणा परिमलितपाटलीमुकुलनिर्मथनबहुलपरिमलोत्पीडसकलनमसृणमासलमलयमारुतोद्धूमायितदशदिङ्मुखा अनर्थकारिणो भवन्ति रजनीपरिणाहाश्च प्रियसख्या।

---

के थरथराने से इसका नीवीबन्धन शिथिलित हो जाता है। हृदय के विक्षुब्ध होने के कारण भीतर आने-जाने वाली निःश्वास वायु से अनेक प्रकार से उत्पन्न होनेवाली पुलकावली युक्त स्तन-मण्डलों के ऊपर कांपती हुई भुजा-रूपी लताओं के बन्धन के पड़ने पर यह झट से जाग उठती है और कटाक्षों द्वारा चारों ओर से शैय्या को सूनी देखकर आँखें बंद कर बेसुध हो जाती है। फिर तो घबरायी हुई सखियों द्वारा सादर प्रबल प्रयास करने पर जब कुछ देर बाद मूर्च्छा हटती है तो इसे फिर लंबी सांसें आने-जाने लगती हैं, तब कहीं जा कर हमें इसके जीवित होने की आशा दिखायी पड़ती है। उस समय किंकर्त्तव्यविमूढ सखीजनों को यह अपने जीवन की समाप्ति चाहने की प्रार्थना व्यक्त करती हुई केवल दुर्निवार दैव को उसके निन्दनीय व्यवहार के लिए, उपालम्भ देने में प्रवृत्त करती है। भगवती स्वयं देखें कि इसके अति लावण्ययुक्त सुकुमार शरीर में क्रूरता के साथ वृद्धि को प्राप्त कामदेव की कितने दिनों बाद कुशलतापूर्वक निवृत्ति होगी। और ऐसे दुःखों में अभी इसको कितनी रातें व्यतीत करनी पड़ेंगी, जिनके पूर्व भाग के अन्धकारावरण को चारु चन्द्रिका दूर करती रहती है और जिसकी उज्ज्वलता कर्णाटक देशीय कामिनी के उन कोमल कपोल-स्थलों के समान है, जो रतिक्रीडा के कलह में उत्पन्न कोप के कारण ईषद् लाल वर्ण के हो जाते हैं। अथवा जब उमड़ते हुए क्षीरसागर के समान श्वेत-शुभ्र ज्योत्स्ना अपने प्रकाशरूपी जल से सर्वथा गगनाङ्गण की सफेदी किया करती है और जब परिमल से युक्त पाटल-पुष्प के मुकुलों के मर्दन से प्रचुर सुगन्ध के उद्गार से सम्मिश्रित होने के कारण सुख-स्पर्शी और परिपुष्ट उद्गत धूम के समान दक्षिण का वायु अपनी अठखेलियों के साथ दसों दिशाओं को प्रफुल्लित करता है, तब ऐसी लंबी-लंबी रातें हमारी इस प्रिय सखी के लिए अनर्थकारिणी हो जाती हैं।

कण्ठावलम्बिता बकुलमाला सञ्जीवनं प्रियसख्याः। (इति बकुलमालां दर्शयति) (अण्णं अ जाणिदं होदु भअवदीए। एदं अ माहप्पपडिच्छन्दआहाणं वित्तफलअं। एसा वि तस्स जेव्व सहत्थविरइदेत्ति कण्ठावलम्बिदा बउलमाला संजीवणं पिअसहीए।)

माधवः—

जितमिह भुवने त्वया यदस्याः
सखि ! बकुलावलि ! वल्लभासि जाता।
परिणतबिसदण्डकाण्डपाण्डु-
स्तनपरिणाहविलासवैजयन्ती ॥१५॥

(नेपथ्ये कलकलः। सर्वे आकर्णयन्ति)

रे रे शङ्करपुरवासिजनाः ! एष खलु यौवनारम्भभरितदुर्विषहामर्षरोषव्यतिकरबलात्कारविघटितोद्घाटितलोहपञ्जरप्रतिलग्नभग्नकलितनिगलो निजलीलाविलासोद्वेल्लवल्लभतुङ्गलाङ्गूलविकटवैजयन्तिकाविषमडामरोड्डामरशरीर-सन्निवेशो मठादपक्रम्य तत्क्षणसतृष्णकवलितानेकदेहिदेहावयवसम्पन्निष्ठुरास्थि-खण्डखण्डनटङ्कारकटकटायमानकरालकठिनदंष्ट्राकरालमुखकन्दरोविकटविस्-

---

हटा कर) यह भी उन्ही के अपने हाथो से बनायी गयी मौलसिरी के पुष्पो की माला है, जो प्रियसखी के कण्ठ मे अवलंबित है और उसके जीवन का सहारा है।

माधव—हे सखी बकुलावली ! इस संसार में तुम विजयिनी हो, जो पके हुए मृणाल दण्ड के खण्ड की भाँति नितान्त शुभ्र वर्ण के मनोहर एवं विशाल युगल स्तनों के ऊपर विलास की पताका के रूप में अवस्थित होकर उसकी प्रियतमा बन गयी हो॥१५॥

(नेपथ्य मे कोलाहल होता है। सभी लोग सुनने का नाट्य करते हैं।)

अरे ! रे ! शंकर के मन्दिर में निवास करने वालो ! यह अत्यन्त भयंकर एवं दुष्ट व्याघ्र क्रुद्ध काल के समान आचरण कर रहा है। यह अपनी नई जवानी के जोर के मारे अतीव क्रोध एवं असहिष्णुता के मिलने से उन्मत्त हो गया है। इसने खींचखाँच कर लोहे के फाटक को खोल दिया है, कटघरे से लगी जंजीर टूटकर इसके पैरों मे ही लगी हुई है। भयंकर पताका के समान अपनी प्रिय पूछ को अपनी इच्छा के अनुसार ऊपर ऐंठते हुए उठाए हुए है, जिससे इसका बन्धन-रहित भयंकर और विशाल शरीर और भी दुर्दर्शनीय बन गया है। अपने बन्धन-गृह से बाहर निकल कर इसने उसी समय क्षुधा के कारण अनेक प्राणियों के शरीर को

म्भगोद्दामदारुणचपेटामोटितपरिमिलितनरतुरङ्गजाङ्गलोद्गारभरितगलगुहागभं-गम्भीरघर्घरो रल्लिगल्लूरणशब्दमंदमंपरिपूरितनभस्तलो निहतनिष्पेषितनष्ट-निःशवितारोपजननिवहः कठोरनखरखररदलिताकृष्टजन्तुगात्रावयवप्रवृत्त-रक्तकर्दमितगतिपथो दुष्टशार्दूलः कृतान्तलीलायितं करोति। तत्परिरक्षत यथा-शक्त्यात्मनो जीवितमिति। (रे रे संकरउरवासिजाणपदा, एसो क्खु जोव्वणार-म्भभरिददुव्विसहामरिसरोसवइअरबलामोडोअविघडिदुग्घअलोहपञ्जरपडिलग्गसंग-लिअणिअलो णिअलीलाविलासुव्वेलिअवल्लहतुङ्गलङ्गूलविअडवंजअन्तिआवि-समडामरुद्दामसरीरसंणिवेसो मठाहो अवक्कमिअ सवलणसतिण्णकवलिआणेअ-देहिदेहावअवमज्झणिट्ठुरत्थिखण्डखण्डणटंकारकडकडाअन्तकरवत्तकठिणदाढाकरा-लमुहकन्दरो विअडविहंगणुद्दामदारुणचपेडामोडिअपरिमिलिअणरतुरङ्गज-ङ्गलुग्गालभरिअगलगुहागब्भगम्भीरघग्घरो रल्लिगल्लूरणसद्दसंदब्भपरिपूरिअणहो-अलो णिहदणिप्पेसिदणट्ठणिट्ठाविदासेसजणणिवहो कठोरणहरकप्परदलिआक-ड्ढअजन्तुगत्तावअवपउत्तरत्तकद्दमिअगइवहो दुट्ठसद्दूलो कअन्तलीलाइदं करेदि। ता पडिरक्खह जहासत्ति अत्तणो जीविदं त्ति)

(प्रविश्य संभ्रान्ता)

**बुद्धरक्षिता**—परित्रायध्वम्। एषा नः प्रियसख्यमात्यनन्दनस्य भगिनी मदयन्तिकैतेन दुष्टशार्दूलेन हतविद्रावितपरिजनाभिभूयते। (परित्ताअध। एसा

---

ग्रास बना दिया है। उन शरीरों के मध्य भागों को भक्षण करते समय कठोर हड्डियों को चबाते हुए यह आरे की तरह टन टन और कट कट का शब्द अपनी कठिन दाढ़ों से कर रहा है। उस समय इसके भयंकर गुफा के समान मुख का भीतरी भाग अतीव भीषण दिखाई देता है। प्रचण्ड विहार से नितान्त क्रूर चपेटों के एक ही थाप से अनेक मनुष्यों और घोड़ों को मार कर उनका रुधिर एवं मास उदर में गले तक भर कर गंभीर घोर घर्घर गर्जन ध्वनि के विस्तार से आकाश को प्रतिध्वनित कर रहा है। बहुत से लोग मारे गये। बहुतेरों का ढेर हो गया, बहुत-से लोगों का पता नहीं क्या हो गया, और बहुतेरे डर के मारे भाग रहे हैं। उसके कठोर तीक्ष्ण नखों के शरीरों पर लगने से इतना रक्त गिरा है कि सारी सड़क रक्त की कीचड से सन गयी है। तो सब लोग भाग भाग कर यथाशक्ति अपने अपने प्राणों की रक्षा करो।

(प्रवेश करके घबराई हुई-सी)

**बुद्धरक्षिता**—बचाइए। रक्षा कीजिए। यह भयंकर दुष्ट व्याघ्र कुछ सखियों

णो पिअसही अमच्चणन्दणस्स भइणी मदअन्तिआ एदिणा दुट्ठसद्दूलेण हदविद्दाविदपरिअणा अभिभवीअदि)

मालती—नरि लवङ्गिके, अहो महान्प्रमाद। (सहि लवङ्गिए, अहो महन्तो पमादो)

माधवः—बुद्धरक्षिते, क्वासौ?

मालती—(सहर्षसाध्वसम्। स्वगतम्) अहो, एषोऽप्यत्रैव। (अम्हहे, एसो वि एत्थ एव्व)

माधवः—(स्वगतम्) हन्त, पुण्यवानस्मि यदहमतर्कितोपनतदर्शनोल्लसितयाऽनया।

अविरलमिव दाम्ना पौण्डरीकेण नद्धः
स्नपित इव च दुग्धस्रोतसा निर्भरेण।
कवलित इव कृत्स्नश्चक्षुषा स्फारितेन
प्रसभममृतमेघेनेव सान्द्रेण सिक्तः॥१६॥

बुद्धरक्षिता—महाभाग, एष खलूद्यानबाह्यरथ्यामुखे। (महाभाअ, एसो क्खु उज्जाणबाहिअरत्थामुहे)

माधवः—(साटोपम्) अप्रमत्तोऽस्मि।

मालती—लवङ्गिके, सप्राणः खलु जात। (लवङ्गिए, ससओ क्खु जादो)

---

को मार कर और कुछ को भगाकर हमारी प्रिय सखी एवं अमात्यनन्दन की भगिनी मदयन्तिका पर आक्रमण कर रहा है।

मालती—लवंगिके! हाय! यह तो बड़ी असावधानी है।

माधव—बुद्धरक्षिते! वह (व्याघ्र) है कहाँ?

मालती—(हर्ष मिश्रित भय के साथ) अहो! यह भी यहीं पर है।

माधव—(अपने आप) यह हर्ष की बात है जो आकस्मिक ढंग से मुझे यहाँ उपस्थित देखकर यह चकित दृष्टि से मुझे देख रही है। मैं धन्य हो उठा हूँ।

इस प्रकार इन्होंने श्वेत कमलों की माला द्वारा जैसे मुझे खूब कस कर बाँध दिया है, सघन दुग्ध की धारा से जैसे मुझे स्नान करा दिया है, अपने प्रीति-प्रफुल्ल नेत्रों से हमारे समस्त अंगों को ग्रास बना लिया है और अविरल अमृतवर्षी मेघों से जैसे मुझे बलपूर्वक सींच दिया है॥१६॥

बुद्धरक्षिता—महानुभाव! वह व्याघ्र उद्यान के बाहरी मार्ग के अग्रभाग पर है।

माधव—(दर्प समेत) मैं सावधानीपूर्वक सुन रहा हूँ।

मालती—लवंगिके! (मदयन्तिका का जीवन) संशय युक्त हो गया है।

माधवः—(सबीभत्सम्) अहह।

संसक्तत्रुटितविवर्तितान्त्रजाल-

व्याकीर्णस्फुरदपवृत्तरुण्डखण्डः।

कीलालव्यतिकरगुल्फदघ्नपङ्कः

प्राचण्ड्यं वहति नखायुधस्य मार्गः॥१७॥

अहो प्रमादः।

वयं बत! विदूरतः क्रमगता पशोः कन्यका।

सर्वाः—हा मदयन्तिके ! (हा मदअन्तिए!)

कामन्दकीमाधवौ—(सहर्षाकूतम्)

कथं तदवपातितादधिगतायुधः संभ्रमात्।

कुतोऽपि मकरन्द एत्य सहसैव मध्ये स्थितः।

इतराः—साधु, महाभाग! साधु। (साहु, महाभाअ! साहु।)

कामन्दकीमाधवौ—

दृढं च पशुनाहतो व्यसुरसौ कृतश्चामुना॥१८॥

इतराः—अत्याहितम्। (अच्चाहिदं)

---

माधव—(घृणा के साथ) अहह!

यह दुष्ट व्याघ्र जिस मार्ग पर से हो कर गया है वह अतीव भयकर बन गया है। (मनुष्यों आदि के) छिन्न-भिन्न शरीर कही उलटे पड़े हुए हैं, कही उनकी अंतड़ियाँ दिखायी पड़ रही हैं, कही चलते हुए और कही गिरे हुए कबन्ध पड़े हैं, रक्त से सना हुआ कीचड़ पिंडुली तक फैला हुआ है॥१७॥

अहो! असावधानी हो गयी है। हम तो (इतनी) दूर हैं और बेचारी कन्या उस क्रूर पशु के पादक्षेप के समीप पहुच गयी है।

सभी स्त्रियाँ—हाय मदयन्तिके!

कामन्दकी और माधव—(हर्ष और अभिप्राय के समेत)

अरे किस प्रकार से मकरन्द अकस्मात् शीघ्रतापूर्वक आकर उस क्रूर व्याघ्र से मारे गये सशस्त्र पुरुष से हथियार लेते हुए बीच मे खड़ा हो गया है।

दूसरी स्त्रियाँ—हे महानुभाव! आप धन्य हैं। धन्य हैं।

कामन्दकी और माधव—उस क्रूर पशु ने मकरन्द को दृढता के साथ घायल कर दिया है किन्तु मकरन्द ने उसे निष्प्राण कर दिया है। ॥१८॥

दूसरी स्त्रियाँ—बहुत बड़ा आश्चर्यजनक काम किया।

कामन्दकी—(साकूतम्) कथं व्यालनखप्रहारनिःसृतरक्तनिवहः क्षितितलविपक्तखड्गलतावष्टम्भनिश्चलः संभ्रान्तमदयन्तिकावलम्बितस्ताम्यति वत्सो मकरन्दः।

इतराः—हा धिक्, गाढप्रहारतया क्लाम्यति महाभागः। (हद्धि, गाढप्पहारदाए, किलम्मदि महाभाओ।)

माधवः—कथं प्रमुग्ध एव। भगवति! परित्रायस्व माम्।

कामन्दकी—वत्स, अतिकातरोऽसि। नन्वेहि, पश्यावस्तावत्।

(इति निष्क्रान्ताः सर्वे)

इति महाकविश्रीभवभूतिविरचिते मालतीमाधवे तृतीयोऽङ्कः।

---

कामन्दकी—(साभिप्राय) व्याघ्र के नाखून के प्रहार से बहुत सारा रक्त निकल गया है, फिर भी पृथ्वी तल पर लगे हुए खड्ग के अवलंबन से वह निश्चल है, मदयन्तिका ने बड़ी फुर्ती से उसे सहारा दिया है, अहा, मेरा स्नेहभाजन मकरन्द किस प्रकार मूर्च्छित हो गया है।

दूसरी सभी स्त्रियाँ—हाय! धिक्कार है। गंभीर आघात के कारण महाभाग मकरन्द अतीव क्लान्त हो गये हैं।

माधव—अरे क्या मूर्च्छित हो गया है? भगवती! मुझे बचाइए।

कामन्दकी—बेटा! तुम बहुत कातर हो गये हो। आओ, हमारे साथ। हम चल कर देखें।

(सब लोग जाते हैं।)

महाकवि भवभूति रचित मालतीमाधव नाटक में शार्दूल-विद्रावण नामक-तृतीय अंक समाप्त।

---

## चतुर्थोऽङ्कः

(ततः प्रविशतो मदयन्तिकामालतीभ्यामवलम्ब्यमानौ मूर्च्छौ मकरन्दमाधवौ सम्भ्रान्ता कामन्दकी बुद्धरक्षिता लवङ्गिका च)

मदयन्तिका—प्रसीद भगवति, परित्रायस्व मदयन्तिकानिमित्तं संशयित-जीवितं विपन्नानुकम्पिनं महाभागम्। (पसीद भअवदि, परित्ताहि मदअन्तिआ-णिमित्तं संसइदजीविदं विवण्णाणुकम्पिणं महाभाअं।)

इतराः—हा धिक्। किमिदानीमत्र प्रेक्षितव्यमस्माभिः। (हृद्धि। किं दाणिं एत्थ पेक्खिदव्व अम्हेहिं।)

कामन्दकी—(उभौ कमण्डलूदकेन सिक्त्वा) ननु भवत्यः! पटाञ्चलैर्वी-जयध्वम्।

(मालत्यादयस्तथा कुर्वन्ति)

मकरन्दः—(समाश्वस्यावलोक्य च) वयस्य, अतिकातरोऽसि। किमेतत्। ननु स्वस्थ एवास्मि।

---

## चतुर्थ अंक

(तदनन्तर मदयन्तिका और मालती द्वारा सहारा दिए गये मूर्च्छित मकरन्द और माधव प्रवेश करते हैं। तथा उनके साथ शीघ्रता में व्यस्त कामन्दकी बुद्धरक्षिता और लवंगिका रहती हैं। )

मदयन्तिका—भगवती प्रसन्न हों। मदयन्तिका के लिए अपने जीवन को संशयग्रस्त करने वाले और विपद्ग्रस्त जन पर दया करने वाले महाभाग की आप रक्षा करें।

दूसरी स्त्रियाँ—हाय धिक्कार है। हम लोग इस समय क्या देखें (करें)।

कामन्दकी—(मकरन्द और माधव को कमण्डलु के जल से सेचन कर) अरे महाभाग्यशालिनियों। अपने वस्त्राचलों से हवा करती जाओ।

(मालती आदि अपने वस्त्राचलों से वैसा ही (हवा करती) हैं।)

मकरन्द—(होश में आकर और देखकर) मित्र! तुम बहुत कातर हो। यह क्या है?

अरे मैं तो स्वस्थ हूँ।

मदयन्तिका—अहो, इदानीं प्रतिबुद्धो मकरन्दपूर्णचन्द्रेण। (अम्हहे, दाणिं पडिबुद्धं मअरन्दपुण्णचन्देण।)

मालती—(माधवस्य ललाटे हस्तं दत्त्वा) महाभाग, दिष्ट्या वर्धसे। ननु भणामि प्रतिपन्नचेतनो महाभाग इति। (महाभाअ, दिट्ठिआ वड्ढसि। ण भणामि पडिवण्णचेदणो महाभाओ त्ति।)

माधवः—(समाश्वस्य) वयस्य, साहसिक, एह्येहि। (इत्यालिङ्गति)

कामन्दकी—(उभौ शिरस्याघ्राय) दिष्ट्या जीवद्वत्सास्मि।

इतराः—प्रियं नः संवृत्तम्। (पिअं णो संवुत्तं।)

(सर्वा हर्षं नाटयन्ति)

बुद्धरक्षिता—(जनान्तिकम्) सखि मदयन्तिके, एष एव सः। (सहि मदअन्तिए, एसो ज्जेव्व सो)

मदयन्तिका—सखि, ज्ञातमेव मया यथैष माधवोऽयमपि स जन इति। (सहि णादो ज्जेव्व मए जह एसो माहवो अअं वि सो जणो त्ति।)

बुद्धरक्षिता—अपि सत्यवादिन्यहम्। (अवि सच्चवादिणी अहं)?

---

मदयन्तिका—अहो। अब मकरन्द रूपी पूर्णचन्द्र ने चैतन्य का लाभ कर लिया है।

मालती—(माधव के ललाट पर हाथ लगाकर) महाभाग! सौभाग्य से तुम्हारी उन्नति हो रही है। अरे! मैं (आप से) कह रही हूं कि महाभाग (मकरन्द) ने चैतन्य लाभ कर लिया है।

माधव—(आवेग में आकर) साहसी मित्र! आओ, आओ।

(आलिङ्गन करता है।)

कामन्दकी—(दोनों का मस्तक सूंघते हुए) सौभाग्य से हमारे बच्चे बच गए हैं।

दूसरी स्त्रियाँ—हम लोगों की अभीष्ट-सिद्धि हो गयी।

(सभी हर्षित होने का नाट्य करती हैं।)

बुद्धरक्षिता—(केवल मदयन्तिका को सुनाकर) सखी मदयन्तिके! यह वही हैं।

मदयन्तिका—सखी! मैं समझ गयी हूं कि जैसे (स्वभाव) के यह माधव हैं उसी प्रकार के यह भी हैं।

बुद्धरक्षिता—अब तो मैं सत्यवादिनी हूं न।

मदयन्तिका—न खल्वस्मादृशीषु युष्मादृश्य. पक्षपातिन्यो भवन्ति। (माधवमवलोक्य) सखि, मालत्या अपि रमणीयोऽस्मिन्महानुभावेऽनुराग-प्रवादः। (इति मकरन्दमेव सस्पृहमवलोकयति) (ण क्खु अम्हारिसेसु तुम्हारिसीओ पक्खवादिणीओ होन्ति। सहि, मालदीए वि रमणिज्जो इमस्सि महाणुहावे अणुराअप्पवादो।

कामन्दकी—(स्वगतम्) रमणीयोर्जितं हि मदयन्तिकामकरन्दयोर्दैवादद्य दर्शनम्। (प्रकाशम्) वत्स मकरन्द, कथं पुनरायुष्मानस्मिन्नवसरे मदयन्तिका-जीवितपरित्राणहेतोर्भगवता दैवेन सन्निधापितः।

मकरन्दः—अद्याहमन्तर्नगरमेव कांचिद्वार्तामुपश्रुत्य माधवचित्तोद्वेग-मधिकमाशङ्कमानस्त्वरितमवलोकितानिवेदितकुसुमाकरोद्यानवृत्तवृत्तान्तः परापतन्नेव शार्दूलावस्कन्दगोचरामिमामभिजातकन्यकामभ्युपपन्नवानस्मि।

(मालतीमाधवौ विमृशतः)

कामन्दकी—(स्वगतम्) वृत्तान्तेन खलु मालतीप्रदानेन भवितव्यम्।

---

मदयन्तिका—हमारी जैसी (सरल मनोवृत्ति वाली) स्त्रियों के लिए तुम्हारी जैसी स्नेहयुक्त सखियाँ कभी पक्षपातिनी नहीं होती हैं। (माधव को देखकर) सखी! इन महानुभाव में मालती का भी प्रेमप्रवाद मनोहर ही है।

कामन्दकी—(अपने आप) आज भाग्य से मदयन्तिका और मकरन्द का इस प्रकार का पारस्परिक दर्शन अतीव मनोहर और तेजस्विता से युक्त हुआ। (प्रकट रूप में) बेटा मकरन्द! मदयन्तिका की जीवन-रक्षा के लिए भगवान् विधाता ने ऐसे संकट के क्षणों में आयुष्मान् को (तुम्हें) किस प्रकार उपस्थित कर दिया था।

मकरन्द—आज मैं नगर के भीतर कोई वृत्तान्त (समाचार) सुनकर--इससे माधव जी के चित्त में अधिक उद्वेग होगा—ऐसी आशंका कर रहा था कि उसी समय अवलोकिता ने मुझे कुसुमाकर उद्यान की खबर दी। तब मैं उसी ओर चल पड़ा कि इसी बीच उस क्रूर व्याघ्र के पंजे में पड़ती हुई उस कुलीन कन्या के समीप पहुँच गया और उसकी रक्षा के प्रयास में जुट गया।

(मालती और माधव चिन्ता करने लगते हैं।)

कामन्दकी—(अपने आप) वह वृत्तान्त (समाचार) मालती को (नन्दन के लिए) दिए जाने का रहा होगा। (प्रकट रूप में) बेटा माधव! सौभाग्य

(प्रकाशम्) वत्स! माधव!! दिष्ट्या वर्धितोऽसि मालत्या। सोऽयमवसरः प्रीतिदानस्य।

माधवः—भगवति, इयं मालती—

यद्व्यालव्रणितसुहृत्प्रमोहमुग्धं
कारुण्याद्विहितवती गतव्यथं माम्।
तत्कामं प्रभवति पूर्णपात्रवृत्त्या
स्वीकर्तुं मम हृदयं च जीवितं च॥१॥

लवङ्गिका—प्रतीष्ट. खलु न. प्रियसख्याऽयं प्रसादः। (पडिच्छिदो क्खु णो पिअसहीए अअं पसादो।)

मदयन्तिका—(स्वगतम्) जानाति महानुभावोऽयं जनो रमणीयं मन्त्रयितुम्। (जाणादि महाणुहावो अअं जणो रमणिज्ज मन्तेदुं।)

---

से मालती ने तुम्हे (ललाट मे करतल के स्पर्श से होश मे लाकर) उपकृत किया है। अतएव तुम्हारे लिए भी प्रीति-दान का यह (अच्छा) अवसर है।

माधव—भगवती! यह मालती—

(उस दुष्ट) व्याघ्र के आघात से क्षत-विक्षत शरीर वाले अपने मित्र (मकरन्द) की मूर्च्छा के कारण मूर्च्छित मुझ को अपनी दया, सहानुभूति एव करुणा से व्यथाविहीन बनाते हुए, पूर्णपात्र[1] की भाति अपनी इच्छा से हमारे हृदय और जीवन दोनो को स्वीकार करने मे समर्थ हैं॥१॥

लवंगिका—हमारी प्रियसखी इस अनुग्रह (पूर्वक किए गए दान) को अवश्य ही ग्रहण करेगी।

मदयन्तिका—(अपने आप) यह महानुभाव उपयुक्त समय पर सुन्दर भाषण करना जानते हैं।

---

१. उत्सव आदि के अवसरो पर प्रियजनों द्वारा प्रस्तुत वस्त्रालंकार आदि से भरे-पुरे पात्र को लोग प्रसन्नता से जबरदस्ती खींच कर छीन लेते थे, उसे पूर्णपात्र कहा जाता है। जैसा कि आचार्य का कथन है—हर्षादुत्सवकाले यदलंकारांशुकादिकम्। आकृष्य गृह्यते पूर्णपात्रं पूर्णानकं च तत्॥

मालती—(स्वगतम्) किं नाम मकरन्देनोद्वेगकारणं श्रुतं भविष्यति। (किं णाम मअरन्देण उव्वेअकारणं सुदं हुविस्सदि।)

(प्रविश्य)

पुरुषः—वत्से मदयन्तिके, भ्राता ते ज्यायानमात्यनन्दनः समादिशति। अद्य परमेश्वरेणास्मद्भवनमागत्य भूरिवसोरुपरि परं विश्वासमस्मासु च प्रसादमाविष्कुर्वता स्वयमेव मालती प्रतिपादिता। तदेहि सभाजयावः प्रसादमिति।

मकरन्दः—वयस्य, इयं सा वार्ता।

(मालतीमाधवौ वैवर्ण्यं नाटयतः)

मदयन्तिका—(सहर्षं मालतीमाश्लिष्य) सखि मालति! त्वं खल्वेकनगरनिवासेन पांसुक्रीडनात्प्रभृति प्रियसखी भगिनी च साम्प्रतं पुनरस्माकं गृहस्य मण्डनं जाताऽसि। (सहि मालदि! तुमं क्खु एक्कणअरणिवासेण पंसुकीलणादो पहुदि पिअसही भइणी अ संपदं उण अम्हाणं घरस्स मण्डणं जादासि।)

कामन्दकी—वत्से मदयन्तिके, वर्धसे भ्रातुर्मालतीलाभेन।

---

मालती—(अपने आप) मकरन्द ने कौन सा (माधव के लिए) उद्वेगजनक समाचार सुना होगा।

माधव—मित्र! हमारे लिए वह अति उद्वेगजनक समाचार क्या था?

(प्रवेश करके)

(एक) पुरुष—बेटी मदयन्तिके! आपके ज्येष्ठ भाई अमात्यनन्दन ने आज्ञा दी है कि—आज महाराज ने हमारे निवास-स्थान पर पधार कर अमात्य भूरिवसु के ऊपर अतीव विश्वास तथा हमारे ऊपर परम अनुग्रह प्रकट करते हुए हमारे लिए स्वयमेव मालती को प्रदान किया है। अतः चलो महाराज की कृपा का अभिनन्दन करें।

मकरन्द—मित्र! तो यही वह समाचार है।

(मालती और माधव के मुख मलिन हो जाते हैं—ऐसा नाट्य करते हैं।)

(मदयन्तिका—हर्षपूर्वक मालती का आलिंगन कर) सखी मालती! (हम) तुम इसी एक ही नगर में निवास करते हुए, धूल में खेलने से लेकर मेरी बहिन और प्रियसखी की तरह रही हो। अब फिर तुम हमारे घर का अलंकार बन रही हो।

कामन्दकी—बेटी मदयन्तिके! सौभाग्य से तुम्हारे भाई को मालती प्राप्त हुई। इसके लिए तुम्हें बधाई है।

मदयन्तिका—युष्माकमाशिषां प्रसादेन। सखि लवङ्गिके, भरिता नो मनोरथा युष्माकं लाभेन। (तुम्हाणं आसिसाणं पसादेण। सहि लवङ्गिए, भरिआ णो मणोरहा तुम्हाणं लाहेण)

लवङ्गिका—सखि, अस्माकमप्येतन्मन्त्रयितव्यम्। (सहि, अम्हाणं वि एदं मन्तिदव्वम्)

मदयन्तिका—सखि बुद्धरक्षिते, एहि तावत्। महोत्सव संभावयावः। (सहि बुद्धरक्खिदे, एहि दाव। महोसवं संभावेम्ह) (इत्युत्तिष्ठतः)

लवङ्गिका—(जनान्तिकम्) भगवति, यथा हृदयभरितोद्भिद्यमानविस्मयानन्द-सुन्दरघूर्णितधीरपर्यन्तमनोहरा पर्यस्यन्ते मदयन्तिकामकरन्दयोर्दलितनीलोत्पलमांसलच्छवयो दृष्टिसंभेदा, तथा मन्ये मनोरथनिर्वृत्तसमागमावेताविति। (भअवदि, जह हिअअभरिउब्भिज्जन्तविम्हआणन्दसुन्दरघोलाविदधीरपेरन्तमणोहरा पल्लत्थन्ति मदअन्तिआमअरन्दाणं दलिदणीलुप्पलमसलच्छविआ दिट्ठिसंभेआ, तह मण्णे मणोरहणिव्वुत्तसमाअमा एदे त्ति)

कामन्दकी—(विहस्य) नन्विमौ परस्परं मानसं मोहनमनुभवतः। तथा हि—

> ईषत्तिर्यग्वलनविषमं कूणितप्रान्तमेत-
> त्प्रेमोद्भेदस्तिमितललितं किंचिदाकुञ्चितभ्रु।

---

मदयन्तिका—आप लोगों के आशीर्वाद का अनुग्रह है। सखी लवंगिके! हमारे मनोरथ तुम लोगों के मिल जाने से सफल हो गये हैं।

लवंगिका—सखी! यही तो हम लोगों को भी कहना चाहिए।

मदयन्तिका—सखी बुद्धरक्षिता! आओ! महोत्सव मनायें।

(दोनों उठती हैं।)

लवंगिका—(केवल कामन्दकी को सुनाकर) भगवती! जिस प्रकार के हृदय में भरे हुए और बाहर निकलते हुए आश्चर्य और हर्ष से मनोहर, चचल एवं धीरता से युक्त, अपागदेश में सुन्दर दिखाई देनेवाले पूर्ण विकसित नील कमल के समान छलकती हुई मांसल शोभा से समन्वित मदयन्तिका और मकरन्द के कटाक्ष-विक्षेप हैं, उस प्रकार से मैं विचार करती हूँ कि इनके भी पारस्परिक समागम के मनोरथ मानों पूरे हो गये हैं।

कामन्दकी—(हँस कर) निश्चय ही ये दोनों मन ही मन समागम के सुख का अनुभव कर रहे हैं। क्योंकि—

इनकी आँखें एक दूसरे को देखते समय कुछ तिरछी होने के कारण विस्तृत होने पर भी वक्र (टेढ़ी) हो गयी है, तीन ओर से सकुचित होकर एक ही भाग

कृतार्था भूयासं प्रियसुहृदपत्योपनयतः
प्रयत्नः कृत्स्नोऽयं फलतु, शिवतातिश्च भवतु ॥७॥

मालती—(स्वगतम्) केन पुनरुपायेन सांप्रतं मरणनिर्वाणरयान्तर संभावयिष्यामि। मरणमपि मे मन्दभागधेयाया अभिमतमतिदुर्लभं भवति। (केण उण उवाएण संपदं मरणणिव्वाणस्स अन्दरं संभावइस्सं। मरणं वि मे मन्दभाअहेआए अहिमदं अदिदुल्लहं होदि)

लवङ्गिका—अतिक्लेशिता खलु प्रियसख्येतेनानुकूलविप्रलम्भेन (अदि कीलालिदा क्खु पिअसही एदिणा अणुऊलविप्पलम्भेण)

(प्रविश्य भूषणपटलकहस्ता)

प्रतीहारी—भगवतीममात्यो भणति। एतेन नरेन्द्रानुप्रेषितविवाहनेपथ्येन देवतायाः पुरतोऽलंकर्तव्या मालतीति। (भअवदीं अमच्चो भणादि। एदिणा णरिन्दाणुप्पेसिदविवाहणेवत्थेण देवदाए पुरदो अलंकरिदव्वा मालदि त्ति)

कामन्दकी—युक्तमाङ्गलिकं हि तत्स्थानम्। इतो दर्शय।

प्रतीहारी—एतत्तावद्धवलपट्टांशुकयुगम्। एतच्चोत्तरीयरक्तवर्णांशुकम्। इमे च सर्वाङ्गिका आभरणसयोगा इमे च मौक्तिकहाराः एतच्चन्दनम्। एष सितकुसुमापीड इति। (एदं दाव धवलपट्टंसुअजुअलं। एदं अ उत्तरीअवण्णसुअं।

---

और देवरात) की सन्तानों (मालती और माधव) के पारस्परिक विवाह से मैं कृतकृत्य हो जाऊं। यह सम्पूर्ण प्रयास फलवान एवं मगलदायी हो॥७॥

मालती—(अपने आप) मैं इस समय किस उपाय द्वारा मृत्यु-रूप दुःख-निवृत्ति को प्राप्त कर सकती हूं। मुझ अभागिनी को अभिमत मृत्यु भी अतीव दुर्लभ हो रही है।

लवंगिका—हमारी प्रियसखी अपने प्रियतम (माधव) के विरह से अतिशय दुःखी है।

(आभूषण की पिटारी को हाथ में लेकर प्रवेश कर)

प्रतीहारी—अमात्य ने भगवती से कहा है कि राजा द्वारा भेजे गये इन विवाहोचित अलंकारों से देवता के सम्मुख आप मालती को अलंकृत करें।

कामन्दकी—वह (देवता का) स्थान ऐसे मंगल कार्य के लिए सर्वथा उचित ही है। इधर दिखलाओ।

प्रतीहारी—यह एक जोड़ा श्वेत रेशमी वस्त्र है। यह उत्तरीय (ओढ़नी) के

इमे अ सव्वङ्गिआ आहरणसंजोआ। इमे अ मोत्तिआहारा। एदं चन्दणं। एसो सिदकुसुमापीडो त्ति)

कामन्दकी—(अपवार्य) रमणीय वत्स मकरन्दमवलोकयिष्यति जनः। (प्रकाशम्। गृहीत्वा) भवतु। एवमुच्यताममात्यः।

(प्रतिहारी निष्क्रान्ता)

कामन्दकी—लवङ्गिके, प्रविश त्वमभ्यन्तर वत्सया मालत्या सह।

लवङ्गिका—भगवती पुन। (भअवदी उण)

कामन्दकी—अहमपि विविक्ते तावदलंकरणरत्नाना प्राशस्त्य शास्नतः परीक्ष्ये। (इति निष्क्रान्ता)

मालती—(आत्मगतम्) लवङ्गिकामात्रपरिवारा तावत्संवृत्ता। (प्रकाशम्) इद देवतामन्दिरद्धारम्। तत्प्रविशतु प्रियसखी। (लवङ्गिकामेत्तपरिवारा दाव संउत्ता। एदं देवदामन्दिरदुवारं। ता पविदु पिअसही)

(प्रविशतः)

मकरन्द—इतः स्तम्भान्तरितौ पश्याव।

---

लिए लाल रग का रेशमी वस्त्र है। ये सभी अंगों मे पहनाने के आभूषण हैं। ये मुक्ता के हार हैं। यह चन्दन है, और यह श्वेत पुष्पो का शिरोभूषण है।

कामन्दकी—(अपने आप) नगर निवासी गण वात्सल्यभाजन मकरन्द को सुन्दर रूप मे देखेंगे। (प्रकट रूप मे। पकड़ कर) अच्छी बात है। अमात्य महोदय को ऐसा कह देना।

(प्रतीहारी चली जाती है।)

कामन्दकी—लवंगिके! तुम बच्ची मालती के साथ भीतर चली जाओ।

लवंगिका—और भगवती फिर (कहाँ आयगी?)

कामन्दकी—मैं भी एकान्त स्थान मे शास्त्रीय वचनों के अनुसार इन रत्नों और अलंकारों की श्रेष्ठता की परीक्षा करती हूँ।

(ऐसा कह कर बाहर जाती है।)

मालती—(अपने आप) मैं तो अब एक मात्र लवंगिका के साथ बच गयी हूँ। (प्रकट रूप मे) यह देव मन्दिर का द्वार है। इसलिए प्रिय सखी प्रवेश करें।

(दोनों प्रवेश करती हैं।)

मकरन्द—इस ओर खम्भे की आड़ मे छिप कर हम लोग देखें।

(तया कुरुतः)

लवङ्गिका—सखि, अयमङ्गरागः। इमाः कुसुममालाः। (सहि, अअं अङ्गराओ। इमाओ कुसुममालाओ)

मालती—ततः किम्। (तदो किं)

लवङ्गिका—सखि, अस्मिन्पाणिग्रहणमङ्गलारम्भे कल्याणसंपत्तिनिमित्तं देवता पूजयेत्यम्बयानुप्रेषितासि। (सहि, इमस्सिं पाणिग्गहणमङ्गलारम्भे कल्लाणसंवत्तिणिमित्तं देवदा पूजेहि त्ति अम्बाए अणुप्पेसिदासि)

मालती—(स्वगतम्) कस्मादिदानीं दारुणसमारम्भदैवदुर्विलासपरिणामदुःखनिर्दलितमानसां पुनरपि मर्मच्छेददुःसहां मन्दभागिनीमुपतापयसि। (कुदो दाणिं दारुणसमारम्भदेव्वदुव्विलासपरिणामदुक्खणिद्दलिअमाणसं पुणो वि मम्मच्छेददूसहं मन्दभाइणीं दूमिज्जसि)

लवङ्गिका—अयि किं वक्तुकामासि। (अइ, किं वत्तुकामासि)

मालती—किमिदानीं दुर्लभाभिनिवेशमनोरथविसंवदद्भागधेयो जनो मन्त्रयते। (किं दाणिं दुल्लहाहिणिवेसमणोरहविसंवदन्तभाअहेओ जणो मन्तेदि)

मकरन्दः—सखे, श्रुतम्।

माधवः—असंतोषस्तु हृदयस्य।

---

(वैसा ही करते हैं।)

लवंगिका—सखी! यह अंगराग है और यह फूलों की मालाएँ हैं।

मालती—इससे क्या?

लवंगिका—माता जी ने आपको इसीलिए यहाँ भेजा है कि इस मंगल-विवाह के आरम्भ में कल्याण-सम्पत्ति की प्राप्ति के लिए देवता की पूजा करो।

मालती—(अपने आप) इस समय भयकर कार्य का आरम्भ करने वाले विधाता के दुर्व्यवहार के परिणाम-रूप दुःख से विदीर्ण हृदयवाली एवं दुःसह मर्मस्थल के भेदन से पीडित इस अभागिनी को तुम फिर क्यों जला रही हो?

लवंगिका—अरे! तुम क्या कहना चाहती हो।

मालती—जिसका मनोरथ दुर्लभ वस्तु का प्रार्थी हो, और उसका भाग्य विपरीत हो तो वह और क्या बोलेगा।

मकरन्द—मित्र! सुना (कुछ)।

माधव—यह तो इसके हृदय का असन्तोष है।

**मालती**—(लवङ्गिकां परिष्वज्य) परमार्थभगिनि ! प्रियसखि ! लवङ्गिके ! एषेदानीं ते प्रियसख्यनाथा मरणे वर्तमानाऽऽगर्भनिर्गमनिरन्तरोपारूढविस्रम्भसदृशं परिष्वज्याभ्यर्थयते। यदि तेऽहमनुवर्तनीया ततो मां हृदयेन धारयन्ती समग्रसौभाग्य-लक्ष्मीपरिग्रहैकमङ्गलं माधवस्य श्रीमुखारविन्दमानन्दमसृणं प्रलोकय। (इति रोदिति) (परमत्थबहिणि पिअसहि लवङ्गिए, एसा दाणिं दे पिअसही अणाहा मरणे वट्टमाणा आगब्भणिग्गमणिरन्तरोवारूढविस्सम्भसरिसं परिस्सजिअ अब्भत्थेदि। जइ दे अहं अणुवट्टणीआ तदो मं हिअएण धारअन्ती समग्ग-सोहग्गलच्छीपरिग्गहेक्कमङ्गलं माहवस्स सिरिमुहारविन्दं आणन्दमसिणं पलोएहि)

**माधवः**—वयस्य मकरन्द

म्लानस्य जीवकुसुमस्य विकासनानि
संतर्पणानि सकलेन्द्रियमोहनानि।
आनन्दनानि हृदयैकरसायनानि
दिष्ट्या मयाप्यधिगतानि वचोमृतानि॥८॥

**मालती**—यथा तस्य जीवितप्रदायिनोऽवसितां मां श्रुत्वा संतप्यमानस्य तथाविधं शरीररत्नं न परिहीयते यथा च लोकान्तरगतामपि मामुद्दिश्य स जनः स्मरणकथामात्रपरिशेषां कालान्तरेणापि लोकयात्रां न शिथिलीकरोति तथा कुरु। एवं ते प्रियसखी मालती सकामा भवति। (जह तस्स जीविदप्पदाइणो अवसिदं

---

**मालती**—(लवंगिका का आलिंगन करती हुई) हे वास्तविक बहिन ! प्रिय सखी ! लवंगिके ! अब इस समय यह तुम्हारी प्रियसखी अनाथ है और प्राण-त्याग का निश्चय कर चुकी है अत तुम्हें आलिंगन कर के गर्भावस्था से निकलने के समय से लेकर आज तक निरन्तर प्रगाढ विश्वास के अनुरूप प्रार्थना कर रही है कि यदि तुम्हें मेरे मन के अनुरूप चलना है तो मुझे हृदय में धारण कर, समस्त सौभाग्य-श्री के स्वीकार-रूप अनुपम मंगलमय, आनन्द से मनोहर माधव के मुख-कमल का दर्शन कराओ। (ऐसा कह कर रोती है।)

**माधव**—मित्र मकरन्द ! मैंने भी आज भाग्यवश ग्लानियुक्त जीवन-पुष्प को विकसित करने वाले, अतीव तृप्तिदायी सम्पूर्ण इन्द्रियों को मोहित करने वाले, आनन्ददायी एवं रसायन ओषधि की भांति मन को पुष्टि देने वाले (मालती के) वचन रूप अमृत को प्राप्त कर लिया है॥८॥

**मालती**—मेरी मृत्यु का संवाद सुन कर सन्तप्त मेरे जीवनदाता माधव का वह अनुपम शरीर-रत्न जिस प्रकार से नष्ट न हो और जिस प्रकार से दूसरे लोक में

मं सुणिअ संदप्पमाणस्स तहाविहं सरीररअणं ण परिहीअदि, जह अ लोअन्द-रअगअं वि मं उद्दिसिअ सो जणो सुमरणकहामेत्तपरिसेसं कालन्तरेण वि लोअजत्तं ण सिढिलेदि तह करेसु। एव्वं दे पिअसही मालदी सकामा होइ)

मकरन्दः—हन्त अतिकरुणं प्रस्तुतम्।

माधवः—

नैराश्यकातरधियो हरिणेक्षणायाः
श्रुत्वा निकामकरुणं च मनोहरं च।
वात्सल्यमोहपरिदेवितमुद्वहामि
चिन्ताविषादविपदं च महोत्सवं च॥९॥

लवङ्गिका—अयि प्रतिहतं तेऽमङ्गलम्। इतोऽप्यपरं न श्रोष्यामि। (अइ, पडिहदं दे अमङ्गलं। इदो वि अवरं ण सुणिस्सं)

मालती—सखि प्रियं खलु युष्माकं मालतीजीवितं न पुनर्मालती। (सहि, पिअं क्खु तुम्हाणं मालदीजीविदं ण उण मालदी)

लवङ्गिका—सखि किमिति भणितं भवति। (सहि, किं त्ति भणिदं होदि)

मालती—येन प्रत्याशानिबन्धनैर्वचनसविधानैर्जीवयित्वेमं महावीभत्सारम्भमनु-भावितास्मि। सांप्रतं पुनर्मे मनोरथ एतावानेव। यत्तस्य देवस्य परकीयत्वे-

---

जाने वाली स्मरण एवं कथामात्र से अवशिष्ट मुझको लक्ष्य कर कालान्तर में भी वह अपना लौकिक जीवन-व्यवहार शिथिल न करें, वैसा ही तुम करना। इस प्रकार से तुम्हारी यह सखी मालती कृतार्थ होगी।

मकरन्द—हाय! यह तो कारुणिक प्रसंग उपस्थित हो गया है।

माधव—निराशा से दुःखित चित्त हरिणनयना मालती का यह अतीव करुणाजनक, मन को मोह लेने वाला, सच्चे प्रेम और मोह से भरा हुआ विलाप सुन कर मैं चिन्ताजनित विषाद से युक्त विपत्ति और महोत्सव—दोनों का अनुभव कर रहा हूँ॥९॥

लवंगिका—अरे! तुम्हारे अमंगल विनष्ट हों। मैं इससे अधिक नहीं सुनना चाहती हूँ।

मालती—सखी! तुम लोगों को मालती का जीवन प्यारा है, किन्तु मालती नहीं।

लवंगिका—सखी! तुम यह क्या कह रही हो?

मालती—क्योंकि तुमने आशाजनक वचनों द्वारा इस शरीर को रक्षा कर इस

नापराद्धमात्मानं परित्यज्य निर्वृता भविष्यामि। अस्मिन्प्रयोजने प्रियसखी मेऽपरिपन्थिनी भवतु। (इति पादयोः पतति) (जेण पच्चासाणिब्बन्धणेहिं पअणसंधिहाणेहिं ओआयिअ इमं महाबीभच्छारम्भं अनुभाविदम्हि। संपदं उण मे मणोरहो एत्तिअं जेव्व। जं तस्स चेवस्स परकेरअत्तणेण अवरद्धं अत्ताणं परिच्चइअ णिव्वुदा हुविस्सं। अस्सि पओअणे पिअसही मे अपरिपन्थिणी होदु)

मकरन्दः—एषा परमा सीमा स्नेहस्य।

(लवङ्गिका माधवं संज्ञयाऽऽहूयति)

मकरन्दः—वयस्य, लवङ्गिकास्थाने तिष्ट।

माधवः—परवानस्मि साध्वसेन।

मकरन्दः—इयमेव नेदीयसां प्रकृतिरभ्युदयानाम्।

(माधवः स्वैरं लवङ्गिकास्थाने तिष्ठति)

मालती—सखि, अनुकूलतया प्रसाद कुरु। (सहि, अणुऊलदाए पसादं करेहि)

माधव—सरले! साहसरागं परिहर, रम्भोरु! मुञ्च संरम्भम्।
विरसं विरहायासं सोढुं तव चित्तमसहं मे॥१०॥

---

अतीव कुत्सित घटना के आरम्भ का अनुभव कराया है। अब तो मेरा मनोरथ इतना ही है कि जो यह हमारा शरीर उन (माधव) महानुभाव के लिए परकीय हो गया है तो अब इस अपराधी शरीर को त्याग कर मैं सुखयुक्त हो जाऊँगी। तो हमारी प्रियसखी इस कार्य में प्रतिकूल न बनें। (ऐसा वह कर पैरों पर पड़ती है।)

मकरन्द—यह तो प्रेम की चरम सीमा है।

(लवंगिका माधव को इशारे से बुलाती है।)

मकरन्द—मित्र! आप लवंगिका के स्थान पर जा कर खड़े हो जायें।

माधव—मैं तो इस समय भय के कारण अपने वश में नहीं हूँ।

मकरन्द—अतीव समीपवर्ती अभ्युदय का यही स्वभाव होता है।

(माधव बहुत धीरे धीरे लवंगिका के स्थान पर जा कर खड़ा होता है।)

मालती—सखी! अनुकूल बन कर अनुग्रह करो।

माधव—हे सरले! हे कदली के स्तम्भ के समान जघों वाली! अपने दुःसाहस का संकल्प दूर करो। इस दुष्प्रयास को छोड़ो। क्योंकि तुम्हारे नीरस विरह की वेदना सहने के लिए मेरा चित्त असमर्थ हो रहा है॥१०॥

मालती—सखि, अलङ्घनीयस्ते मालतीप्रणामः। (सहि, अलङ्घणिज्जो दे मालदीप्पणामो)

माधवः—

किं वा भणामि विच्छेददारुणायासकारिणि !
कामं कुरु वरारोहे ! देहि मे परिरम्भणम् ॥११॥

मालती—(सहर्षम्) कथमनुगृहीतास्मि। (उत्थाय) इयमालिङ्गामि। दर्शनं पुनर्बाष्पोत्पीडनेन प्रियसख्याः प्रत्यक्षं न लभ्यते। (आलिङ्ग्य सानन्दम्) सखि, कठोरकमलगर्भपक्ष्मलोऽन्यादृश एव तेऽद्य निर्वापयति मां शरीरस्पर्शः। (सास्रम्) किंच मौलिविनिवेशिताञ्जलिमेंम वचनेन विज्ञापय तं जनम्। यथा न मया मन्दभाग्यया विकसच्छतपत्रलक्ष्मीविलासहारिणो मुखचन्द्रमण्डलस्य स्वच्छन्ददर्शनेन सभावितश्चिरं लोचनमहोत्सवः। मुधा मनोरथैरविरतविजृम्भमाणदुर्वारदुःखावेगव्यतिकरोद्वर्तमानबन्धनं धारितं हृदयम्। गमितास्च वारंवारं सविशेषदुःसहायाभ्युपायितसखीजनाः शरीरसंतापाः। कथमप्यतिवाहिताश्चन्द्रातपमलयमारुतप्रमुखा अनर्थपरम्पराः। सांप्रतं पुनर्निराशास्मि संवृत्तेति। त्वयापि प्रियसखि, सर्वदा स्मर्तव्यास्मि। एषा च माधवश्रीहस्तनिर्माणमनोहरा बकुलमाला मालतीनिर्विशेषं प्रियसख्या द्रष्टव्या सर्वदा हृदयेन धारणीया चेति। (इति स्वकण्ठादुन्मुच्य माधवस्य हृदि बकुलमालां विन्यस्यन्ती सहसापसृत्य साध्व-

---

मालती—सखी ! तुम्हें मालती के प्रणाम (अनुनय भरे वचन) का उल्लंघन नहीं करना चाहिए।

माधव—मैं क्या कहूं ? हे प्रियतम के वियोग में दारुण प्रयास करने वाली सुन्दरी ! अपनी अभिलाषा को पूरी करो और मुझे आलिंगन दो ॥११॥

मालती—(हर्ष पूर्वक) मैं कैसे अनुग्रह का भाजन बन गयी ? (उठ कर) यह मैं आलिंगन दे रही हूँ। किन्तु आसुओं के प्रवाह से आंख की पुतलियां के अवरुद्ध हो जाने से मैं अपनी प्यारी सखी को देख नही पा रही हूं (आलिंगन कर आनन्द के साथ) हे सखी ! कठोर कमल के बीज कोष के समान रोमावली युक्त तुम्हारे शरीर का स्पर्श आज कुछ दूसरे ही प्रकार का मालूम हो रहा है और मुझे शीतल कर रहा है। (आसू बहाते हुए) सिर में अंजलि बाध कर मेरी ये बातें उन (माधव जी) से निवेदिन कर देना कि मुझ अभागिनी द्वारा विकसित कमलदल की शोभा को हरण करने वाले आपके मनोहर मुखचन्द्र मण्डल का स्वच्छन्द दर्शन कर बहुत समय तक अपने नेत्रों का महोत्सव नही मना सकी। कोरे मनोरथों से ही अपने

सोत्कम्पं नाटयति) (वहं अणुगहीदम्हि। इअं आलिङ्गामि। वंतणं उण दाफ्फीडणेण पिसाढिहिअए पच्चवणं ण लभिअदि। सहि, कठोरचवलणअवग्गहूनो अणारिसो वेब्ब दे अज्ज णिव्वावेदि मं सरीरफंसो। चिअ मौलिविनिवेसिदअञ्जली एह पअणेण विण्णवेहि तं जणम्। जह ण मए मन्दभाआए विअसन्तणदपत्तलच्छीविलास-हारिणो मुहचन्दमण्डलस्स सच्छन्ददंसणेण संभाविदो चिरं लोअणमहोसवो। मुहा मणोरहेहिं अधिरअधिअभ्भमाणदुव्वारदुक्खावेअवड्ढअदवत्तमाणबन्धणं धारिदं हिअअं। गमिआ अ वारंवारं सविसेसदूसहाआसदूमाविदसहीअणा सरीरसंदावा। वहे वि अविआहिदा चन्दादवमलअमारुअप्पमुहा अणत्थपरम्पराओ। संपदं उण णिरासम्हि संजत्तेति। तुए वि पिअसहि, सव्वदा सुमरिदव्वम्हि। एसा अ माहवसरीहत्थणिम्माणमणोहरा वउलमाला मालदीणिव्विसेसं णिउञ्जीए दट्ठव्वा सव्वदा हिअएण धारणिज्जा अत्ति)

माधवः—हन्त। (अपवार्य)

एकीकृतस्त्वचि निषिक्त इवावपीड्य
निर्भुग्नपीनकुचकुड्मलयानया मे।

---

घबराते हुए हृदय को धारण किए रही, यद्यपि निरन्तर बढ़ते हुए दुर्निवार दुःख के आवेग के सम्पर्क से उसका (हृदय) बन्धन उन्मूलित हो चुका था। अतीव दुःसह आयासों द्वारा अपनी सखियों को पीड़ित करने वाले शारीरिक सन्ताप बारम्बार सहन किया। काम वेदना मे अनर्थ उपस्थित करने वाले चन्द्रमा के आतप (चादनी) एव मलय वायु आदि अनिष्टकारी पदार्थों को किसी प्रकार सहन किया। किन्तु अब मैं पुनः अतीव निराश हो गयी हूँ। हे प्रिय सखी? तुम्हें भी सदैव मेरा स्मरण करना होगा। यह माधव जी के सुन्दर हाथों की रचना से सुशोभित मनोहारिणी मौलसिरी की माला को तुम अपनी सखी मालती की तरह देखना और इसे सदैव अपने हृदय पर भी धारण करना।

(ऐसा कह कर अपने कण्ठ से उतार कर मौलसिरी की माला माधव के गले में पहनाती हुई मालती यकायक हट कर भयजनित कपन का अभिनय करती है।)

माधव—(अपने आप) यह बड़े सौभाग्य की बात है जो गाढ़े आलिगन से अवमर्दित हो कर कुछ मोटे हुए पीन स्तन मण्डलो से युक्त इन्होंने मेरा आलिगन कर के मेरी चमड़ी को कर्पूर, मुक्ताहार, हरि चन्दन, एव चन्द्रकान्त मणि के रस

कर्पूरहारहरिचन्दनचन्द्रकान्त-
निष्यन्दशैवलमृणालहिमादिवर्गः॥१२॥

मालती—अहो लवङ्गिकया मालती विप्रलब्धा। (अम्हहे, लवङ्गिआए मालदी विप्पलद्धा)

माधवः—अयि स्वचित्तवेदनामात्रवेदिनि! परव्यसनानभिज्ञे! इय-मुपालभसे।

उद्दामदेहपरिदाहमहाज्वराणि
संकल्पसंगमविनोदितवेदनानि।
त्वत्स्नेहसंविदवलम्बितजीवितानि
किं वा मयापि न दिनान्यतिवाहितानि॥१३॥

लवङ्गिका—सखि उपालम्भनीयमुपालब्धासि। (सहि, उवालम्भणिज्जं उवालद्धासि)

कलहंसः—अहो सरसरमणीयता संविधानस्य। (अहो सरसरमणिज्जदा संविहाणस्स)

---

समेत शैवाल, कमलनाल और हिम आदि शीतल पदार्थों को मिश्रित कर सिक्त कर दिया है—ऐसा ही अनुभव इस समय मुझे हो रहा है॥१२॥

मालती—अरे! लवंगिका ने मालती को धोखा दे दिया है।

माधव—अरे अपने ही चित्त की वेदना को जानने वाली! दूसरे की वेदना को न समझने वाली! यह तो तुम मुझे उलाहना दे रही हो।

क्या मैंने भी ऐसे दिनों को नहीं बिताया है, जो प्रचण्ड शारीरिक सन्ताप देने वाले महाज्वर से युक्त थे, मन ही मन आपके समागम-सुख की कल्पना से वेदना के भार को कुछ कम करने वाले एवं हमारे ऊपर आपका सहज अनुराग है—इस धारणा से हमारे जीवन की रक्षा करने वाले थे॥१३॥

लवंगिका—सखी! उलाहने योग्य विषय को उद्देश्य बना कर इन्होंने तुम्हें उचित ही उलाहना दिया है।

कलहंस—अहो! विधाता का विधान भी कितना सरस और रमणीय होता है।

मकरन्दः—महाभागे, एवमेतत्।

> त्वं वत्सलेति कथमप्यवलम्बितात्मा
> सत्यं जनोऽयमियतो दिवसाननैषीत्।
> आबद्धकङ्कणकरप्रणयप्रसाद-
> मासाद्य नन्दतु, चिराय फलन्तु कामाः॥१४॥

लवङ्गिका—महानुभाव, हृदयेऽप्यनिरुद्धस्वयंग्राहसाहसोऽयं जनः किमिदानीं करग्रहणे विचारयति। (महाणुहाव, हिअए वि अप्पडिहदसअंगाहसाहसो अअं जणो किं दाणिं करग्गहणे विआरेदि।)

मालती—हा धिक् कन्यकाजनविरुद्धं किमप्युपन्यस्यति। (हद्धि, कण्णआजणविरुद्धं किं वि उवण्णसदि)

कामन्दकी—(प्रविश्य) पुत्रि कातरे किमेतत्।

(मालती कम्पमाना कामन्दकीमालिङ्गति)

कामन्दकी—(तस्याश्चिबुकमुन्नमय्य) वत्से।

> पुरश्चक्षूरागस्तदनु मनसोऽनन्यपरता,
> तनुग्लानिर्यस्य त्वयि समभवद्यस्य च तव।

---

मकरन्द—महाभागे! यह ऐसा है।

तुम इनके प्रति अनुरक्त रही हो—इस कारण से किसी प्रकार इन्होंने अपने जीवन को धारण करते हुए इतने दिनों को व्यतीत किया—यह बात सत्य है। कंकण से सुशोभित आपके पाणि का प्रणय-प्रसाद पा कर यह आनन्दित हो—इस प्रकार चिरकाल के अनन्तर हमारी अभिलाषाएं पूरी हों॥१४॥

लवंगिका—महानुभाव! इसके पहिले अपने हृदय में स्वयं ग्रहण करने के साहस को जो नहीं रोक सकी वह (मालती) व्यक्ति इस अवसर पर पाणिग्रहण के लिए क्या विचार करेगी।

मालती—हाय धिक्कार है। कुमारी कन्याओं के प्रतिकूल यह क्या कर रही है।

कामन्दकी—(प्रवेश करके) बेटी! डरपोक! यह क्या है?

(मालती कांपती हुई कामन्दकी को भेंटती है।)

कामन्दकी—(उसकी ढोढी को ऊपर उठाते हुए) बेटी!

कामन्दकी—(उसकी ढोढी को ऊपर उठाते हुए) बेटी! तुम्हारे लिए जिसकी और जिसके लिए तुम्हारी नेत्रों के परस्पर देखते ही प्रीति हुई थी, उसके

युवा सोऽयं प्रेयानिह, सुवदने ! मुञ्च जडतां
विधातुर्वैदग्ध्यं विलसतु, सकामोऽस्तु मदनः ॥१५॥

लवङ्गिका—भगवति, कृष्णचतुर्दशीरजनीश्मशानसंचारनिर्व्यूढविषमव्यवसायनिष्ठापितप्रचण्डपाषण्डदोर्दण्डसाहसः साहसिकः खल्वेषः। अतः प्रियसख्युत्कम्पिता। (भअवदि, किसणचउद्दसीरअणिमसाणसंचारणिव्वूढविसमववसाअणिट्ठाविदपचण्डपाखण्डदोद्दण्डसाहसो साहसिओ क्खु एसो। अदो पिअसही उक्कम्पिदा)

कामन्दकी—लवङ्गिके, स्थाने खल्वनुरागोपकारयोर्गरीयसोरुपन्यासः।

मालती—हा तात हा अम्ब ! (हा ताद, हा अम्ब)

कामन्दकी—वत्स माधव !

माधवः—आज्ञापय।

कामन्दकी—इयमशेषसामन्तमस्तकोत्तंसपरागरञ्जितचरणाङ्गुलेरमात्यभूरिवसोरेकापत्यरत्नं मालती, भगवता सदृशसंयोगरसिकेन वेधसा मन्मथेन मया च तुभ्यं दीयते। (इति बाष्पं विमुञ्चति)

---

बाद मन मे एकाग्रता हुई थी और उसके पश्चात् शरीर मे शिथिलता आयी थी, तुम्हारा वह युवा प्रियतम यही है। हे सुन्दरी ! अपनी जड़ता का त्याग करो। विधाता की रचनाचातुरी सुफल हो और कामदेव की अभिलाषा पूरी हो ॥१५॥

लवंगिका—भगवती ! कृष्णपक्ष की अंधकार भरी चतुर्दशी की रात्रि में श्मशान भूमि में जा कर (नरमांस विक्रय जैसा) भयकर कार्य करने वाले एवं पाखण्डी अघोरघण्ट के दुःसाहस को (सदा के लिए) समाप्त करने वाले यह माधव जी अतीव साहसी पुरुष हैं। इसी कारण से हमारी प्यारी सखी काँप उठी हैं।

कामन्दकी—लवंगिके ! तुमने उचित अवसर पर गभीर अनुराग एवं गम्भीर उपकार का उल्लेख किया है।

मालती—हाय तात ! हाय मा।

कामन्दकी—बेटा माधव !

माधव—आज्ञा करें।

कामन्दकी—सम्पूर्ण सामन्त नृपतिगण अपने मस्तक पर धारण करने वाले पुष्पों की धूल (मकरन्द) द्वारा जिसके चरणों की अगुलियों को रजित करते हैं, उन्ही अमात्य भूरिवसु की एकमात्र श्रेष्ठ सन्तान रत्न मालती को योग्य के साथ योग्य को मिलाने के अनुरागी भगवान ब्रह्मा, कामदेव और मैं तुम्हे अर्पित कर रहे हैं। (ऐसा कह कर आँसू बहाती है।)

मकरन्दः—फलितं हि तर्हि भगवतीपादप्रसादेन।

माधवः—तत्किमिदमनवरतबाष्पायितमाननं भगवत्याः।

कामन्दकी—(अंशुकाञ्चलेन नेत्रे परिमृज्य) वत्स, किमपि कल्याणं वक्तुकामास्मि।

माधवः—ततः किम्।

मकरन्दः—विज्ञापयामि।

माधवः—आज्ञापय।

कामन्दकी—

परिणतिरमणीयाः प्रीतयस्त्वद्विधाना-
महमपि तव मान्या हेतुभिस्तैश्च तैश्च।
तदिह सुवदनायां तात! मत्तः परस्मा-
त्परिचयकरणायाः सर्वथा मा विरंसीः॥१६॥

(इति पादयोः पतितुमिच्छति)

माधवः—(निवारयन्) अहो, वात्सल्यादतिक्रामति प्रसङ्गः।

---

मकरन्द—भगवती के चरणों का अनुग्रह आज फलदायी सिद्ध हुआ।

माधव—तब फिर भगवती का मुख क्यों इस प्रकार आंसुओं से भीगा हुआ है?

कामन्दकी—(अपने चीर के आंचल से दोनों आंखों को पोंछ कर) बेटा! मैं तुम्हें कुछ कल्याण की बातें बताना चाहती हूँ।

माधव—वह क्या?

कामन्दकी—बताती हूँ।

माधव—आज्ञा करें।

कामन्दकी—तुम्हारे जैसे लोगों की प्रीति का परिणाम सुन्दर होता है। मैं भी अनेक कारणों से तुम्हारी मान्या हूँ। अतः हे तात! मेरे परोक्ष में भी इस सुमुखी (मालती) के प्रति तुम प्रगाढ़ स्नेह युक्त दया की भावना से कभी विरत मत होना॥१६॥

(ऐसा कह कर माधव के चरणों में गिरना चाहती है।)

माधव—(रोकते हुए) अरे! अतीव स्नेह की भावना से अभिभूत हो कर औचित्य का उल्लंघन कर रही हैं।

मकरन्दः—भगवति।

श्लाध्यान्वयेति नयनोत्सवकारिणीति
निर्व्यूढसौहृदरसेति गुणोज्ज्वलेति।
एकैकमेव हि वशीकरणं गरीयो
युष्माकमेवमियमित्यथ किं ब्रवीमि॥१७॥

कामन्दकी—वत्स! माधव!

माधवः—आज्ञापय।

कामन्दकी—स्वीक्रियतामियम्।

माधवः—स्वीकरोमि।

कामन्दकी—वत्स! माधव! वत्से! मालति!

माधवः—आज्ञापय।

मालती—आज्ञापयतु भगवती। (आणवेदु भअवदी)

कामन्दकी—

प्रेयो मित्रं, बन्धुता वा समग्रा सर्वे कामाः, शेवधिर्जीवितं वा।
स्त्रीणां भर्ता, धर्मदाराश्च पुंसामित्यन्योन्यं वत्सयोर्ज्ञातमस्तु॥१८॥

---

मकरन्द—भगवती! यह मालती उच्चकुलोत्पन्ना है, नेत्रों को परमानन्द देने वाली है। प्रेम-रस का निर्वाहक करने वाली है, सद्‌गुणों से समलङ्कृता है—इस प्रकार इनका एक-एक गुण ही इन्हें (माधव को) गंभीर रूप से अपने वश में करने का साधनभूत है। और उसके बाद यह आपकी स्नेहपात्र है अतः मैं आपके इस प्रस्ताव के बारे में क्या कहूँ? ॥१७॥

कामन्दकी—वत्स माधव!

माधव—आज्ञा करें।

कामन्दकी—इस (मालती) को स्वीकार करो।

माधव—स्वीकार करता हूँ।

कामन्दकी—वत्स माधव। बेटी मालती।

माधव—आज्ञा करें।

मालती—भगवती आज्ञा दें।

कामन्दकी—स्त्रियों के लिए उनका पति, और पतिजनों के लिए उनकी धर्मपत्नियाँ प्रियतम, प्रिय मित्र, सम्पूर्ण बन्धु-समूह, सभी प्रकार की अभिलाषाओं के विषय, विविध संपदाओं की निधि एवं जीवन स्वरूप हैं—यह तुम दोनों बच्चों को विदित होना चाहिए॥१८॥

मकरन्दः—अथ किम्।

लवङ्गिका—यथा यूयमाज्ञापयथ। (जह तुम्हे आणवेत्थ)

कामन्दकी—वत्स मकरन्द, अनेनैव वैवाहिकेन मालतीनेपथ्येनापवारितः प्रवर्तस्व परिणयायात्मनः। (इति पटलकमर्पयति)

मकरन्दः—यदाज्ञापयसि यावदितश्चित्रजवनिकामन्तर्धाय नेपथ्यं धारयामि। (तथा करोति)

माधवः—भगवति गुरुमपि बह्वनर्थकमतिसंकटमेतद्वयस्यस्य।

कामन्दकी—कस्त्वमस्यां चिन्तायाम्?

माधवः—एवं भगवत्येव जानाति।

मकरन्दः—(प्रविश्य विहसन्) एषोऽस्मि मालती संवृत्तः।

(सर्वे सविस्मयं सकौतुकं पश्यन्ति)

माधवः—(गाढं मकरन्दं परिष्वज्य) भगवति, कृतपुण्य एव नन्दनः। यतः प्रियवयस्यमीदृशं मनसा मुहूर्तमपि कामयिष्यति।

---

मकरन्द—और क्या (आज्ञा है?)

लवंगिका—आप जैसी आज्ञा करें।

कामन्दकी—वत्स मकरन्द! मालती के विवाह अवसर के लिए तैयार इन्ही वस्त्राभूषणो को पहिन कर तुम भी दूसरो से अविदित रहते हुए अपने विवाह के लिए तैयार हो जाओ।

(ऐसा कह कर मकरन्द को मालती के वस्त्राभूषणो की पिटारी देती है।)

मकरन्द—आपकी जैसी आज्ञा। मैं इसी रगबिरगे पर्दे के पीछे छिप कर अपनी वेश-भूषा धारण करता हूँ। (वैसा करता है।)

माधव—भगवती! हमारे मित्र के लिए यह उपक्रम सुगम होते हुए भी बड़े अनर्थों एवं संकटो से युक्त है।

कामन्दकी—इसकी चिन्ता तुम्हे क्यो है?

माधव—यदि ऐसा है तो फिर भगवती जानें।

मकरन्द—(*प्रवेश कर के हँसते हुए*) *यह मैं मालती बन गया हूँ।*

(सभी लोग आश्चर्य और कौतूहल मे देखते हैं।)

माधव—(मकरन्द का गाढ आलिंगन कर) भगवती! नन्दन ने पुण्यकर्म ही किया है। जो इस प्रकार (मालती वेशधारी) अपने प्रिय मित्र को कुछ क्षणों के लिए ही सही मन से कामना करेगा।

कामन्दकी—वत्सौ मालतीमाधवौ, इतो निर्गत्य वृक्षगहनेन गम्यतामुद्वाह-मङ्गलार्थम्। अस्ति तत्र दीर्घिकायाः पश्चादुद्यानवाटः। सुविहितं तत्रैव वैवाहिक-द्रव्यजातमवलोकितया भूयश्च।

गाढोत्कण्ठकठोरकेरलवधूगण्डाच्छपाण्डुच्छदै-
स्ताम्बूलीपटलैः पिनद्धफलितव्यानम्रपूगद्रुमाः।

अतस्तत्रैव मदयन्तिकामकरन्दयोर्विवादागमनं स्थातव्यम्।

माधवः—(सहर्षम्) कल्याणान्तरावतंसा कल्याणसंपदुपरिष्टाद्भवतु।

कलहंसः—दिष्ट्या इदमपि प्रियं नो भविष्यति। (दिट्ठिआ इदं वि पिअं णो हुविस्सदि)

कामन्दकी—कथं सदेहो भवतः।

लवङ्गिका—श्रुतं प्रियसख्या। (सुदं पिअसहीए)

---

कामन्दकी—वत्स मालती एवं माधव! तुम लोग इस स्थान से निकल कर विवाह के मंगलाचरण के लिए वृक्षों से बहुल मार्ग द्वारा जाओ। वहाँ पर बावली के पीछे जो वाटिका है वहीं अवलोकिता ने विवाह के लिए उपयोगी सुन्दर वस्तुओं का आयोजन किया है। और भी,

प्रगाढ उत्कण्ठायुक्त प्रौढा केरल देशीय रमणियों के कपोलों के समान निर्मल श्वेत-पीत पत्रों से युक्त, नागवल्लरी (ताम्बूललता) के समूहों से वेष्टित, फल युक्त झुके हुए सुपारी के वृक्षों से युक्त, कक्कोली फल का भक्षण करने वाले मनोहर पक्षियों के शब्दों से गुंजायमान एवं वायु से संचालित बीजपूरों की बाड़ से सुरक्षित उस वाटिका प्रदेश के भूमिभाग तुम दोनों के लिए अतीव प्रीतिकारी बनें॥१९॥

इसलिए जब तक मदयन्तिका और मकरन्द का आगमन वहाँ न हो जाय तब तक तुम दोनों को रहना चाहिए।

माधव—(सहर्ष) हमारी यह कल्याणी समृद्धि कालान्तर में दूसरे कल्याणों का अलंकरण बने।

कलहंस—क्या सौभाग्य से यह भी (मदयन्तिका और मकरन्द का विवाह) हम लोगों का अभीष्ट सिद्ध होगा।

कामन्दकी—आपको सन्देह क्यों है?

लवंगिका—क्या प्रियसखी ने सुना?

कामन्दकी—वत्स मकरन्द, भद्रे लवङ्गिके, इतः प्रतिष्ठामहे।

मालती—सखि, त्वयापि गन्तव्यम्। (सहि, तुए वि गन्तव्वं)

लवङ्गिका—(विहस्य) साम्प्रतं खलु वयमत्रापसरामः। (इति निष्क्रान्ताः कामन्दकीलवङ्गिकामकरन्दाः) (संपदं वखु अम्हे एत्थ ओसरम्ह)

माधवः—अयमिदानीमहम्।

आमूलकण्टकितकोमलबाहुनालमार्द्राङ्गुलीदलमनङ्गनिदाघतप्तः।
अस्याः करेण करमाकलयामि कान्तमारक्तपङ्कजमिव द्विरदः सरस्याः॥

(इति निष्क्रान्ताः सर्वे)

इति महाकविश्रीभवभूतिविरचिते मालतीमाधवे षष्ठोऽङ्कः

---

कामन्दकी—वत्स मकरन्द! भद्रे लवंगिका! यहाँ से प्रस्थान करें।

मालती—सखी! क्या तुम्हें भी जाना होगा।

लवंगिका—(हंस कर) इस अवसर पर तो हम लोग जा रहे हैं।

(ऐसा कह कर कामन्दकी, लवंगिका और मकरन्द जाते है।)

माधव—इस समय यह मैं।

जिसका नालदण्ड मूल भाग से कण्टकित होने पर भी कोमल है, जिसके पत्र-समूह जल से शीतल है, ऐसे मनोहर, रक्तिम वर्ण के सरोवर के कमल को अपने शुण्डा दण्ड में जिस प्रकार ग्रीष्म की ऊष्मा से सन्तप्त गजराज ग्रहण करता है, उसी प्रकार कामदेव की पीड़ा से व्यथित मैं अपने हाथ से मूलपर्यन्त रोमाचयुक्त, कोमल मृणाल दण्ड की भांति मनोहर, स्वेद जल से भीगी हुई अगुलियों से सुशोभित मालती के सुन्दर रक्तिम हाथ को ग्रहण करता हूँ॥२०॥

(सभी लोग बाहर जाते है।)

श्री महाकवि भवभूति रचित मालतीमाधव नाटक में
मालती-उपहार नामक छठा अंक समाप्त

# सप्तमोऽङ्कः

(ततः प्रविशति बुद्धरक्षिता)

**बुद्धरक्षिता**—अहो, सुश्लिष्टमालतीनेपथ्यलक्ष्मीविप्रलब्धनन्दनकरग्रहोऽमात्यभूरिवसुमन्दिरे भगवत्याः सविधानेन क्षेमेण गोपायितोऽद्य मकरन्दः। अद्य वयं नन्दनावासमुपगताः। अतो भगवती नन्दनमापृच्छ्य निजावसथं गता। अयं च नववधूगृहप्रवेशविरचिताकालकौमुदीमहोत्सवप्रमत्तपर्याकुलाशेषपरिजनः प्रदोषोऽनुकूलयिष्यत्यद्य नो व्यवसितम्। सांप्रतं च त्वरमाणकामः कामयितुं सपादपतनमभ्यर्थ्य पुनर्बलात्कारेणाभिद्रवन्मकरन्देन निष्ठुरं प्रतिहतो जामाता। स च वैलक्ष्यरोषावेशस्खलदक्षरोऽवरदितनयनप्रस्फुरद्वदनो 'न मे सांप्रतमनया कौमारबन्धक्या प्रयोजनमि'ति सशपथं प्रतिज्ञां कृत्वा वासभवनान्निर्गतः। तस्मादनेन प्रसङ्गेन मदयन्तिकामानीय मकरन्देन संयोजयिष्यामि। (इति निष्क्रान्ताः) अम्हहे, सुसिलिट्ठमालदीणेवच्छलच्छीविप्पलद्धणन्दकरग्गहो अमच्चभूरिवसुमन्दिरे भअवदीए संविहाणेण खेमेण गोवाइदो अज्ज

---

## सातवां अंक

(तदनन्तर बुद्धरक्षिता प्रवेश करती है।)

**बुद्धरक्षिता**—अरे! मालती का वस्त्राभूषण धारण कर उसकी सुन्दरता से ठगे गये नन्दन ने अमात्य भूरिवसु के भवन में आज जिसका पाणिग्रहण किया है, वह मकरन्द जी भगवती कामन्दकी के उद्योग से कुशलपूर्वक सुरक्षित हो चुके हैं। आज हम लोग नन्दन के भवन में आ गये हैं और भगवती कामन्दकी नन्दन से अनुज्ञा लेकर अपने आवास को चली गयी। और इधर नववधू के गृह-प्रवेश के उपलक्ष्य में आयोजित अकाल कौमुदी-महोत्सव के कारण सभी नौकर-चाकर असावधान और व्यस्तचित्त हो गये हैं, अतः यह रात्रि के आरम्भ (सन्ध्या) का समय आज हम लोगों के अभीष्ट मदयन्तिका (और मकरन्द) के विवाह के प्रयास के लिए अनुकूल सिद्ध होगा। इस समय काम की वेदना में विलम्ब को न सहन कर सकने वाले जामाता नन्दन (मालती रूप धारी मकरन्द के साथ) सहवास करने के लिए उसके चरणों पर गिर कर जब प्रार्थना करने लगे (किन्तु फिर भी मालती रूपधारी

मअरन्दो। अज्ज अम्हे णन्दणावासं उगवदाअदो भअवदो नन्दणं आपुच्छिअ णिआवसहं गआ। अअं अ णववहूवरप्पवेसजनिरदहासालकोमुदीमहूसवप्पसत्तदव्जाउलासेसपरिअणो पदोसो अगुऊलइस्सदि अज्ज णो प्पवसिदं। संपदं अ तुवरन्तकामो कामेदुं सपादपडणं अब्भत्थिअ पुणो बलामोडिअ अभिद्दवन्तो मअरन्देण णिट्ठुरं पडिहदो जामादा। सो अ मेल्लअरोसावेसतरलन्तअक्खरो ओहट्टणअणप्फुरन्तरअणो ण मे संपद इमाए कोमारवड्डईए पओअणं त्ति सासवहं पइण्णं कादूण य।सभवणादो णिग्गदो। ता एदेण पसङ्गेण मदअन्तिअं आणोअ मअरन्देण संओजइस्सं)

इति प्रवेशकः।

(ततः प्रविशति शय्यागतो मकरन्दो लवङ्गिका च)

मकरन्दः—लवङ्गिके, अपि नाम बुद्धरक्षितामशल्या भगवतीनीतिर्निर्वक्ष्यते।

लवङ्गिका—क संदेहो महाभागस्य? किं बहुना? यथैव मञ्जीरशब्दस्तथा जानामि तेन व्यपदेशेनानीता बुद्धरक्षितया मदयन्तिकेति। तदुत्तरीयापवारितः सुप्तलक्षणस्तिष्ठ। (को सदेहो महाभाअस्स। किं बहुणा। जह एसो मञ्जीरसद्दो तह

---

मकरन्द जब समागम के लिए सहमत नही हुए तो नन्दन) फिर बलपूर्वक समागम के लिए प्रवृत्त हो कर आक्रमण पर उतारू हो गया। उस समय मकरन्द ने नन्दन को बड़ी निष्ठुरता के साथ अपने चरण प्रहार से आहत कर दिया, जिससे अत्यन्त अप्रतिम एवं क्रोधावेश से विचलित होने के कारण नन्दन के मुख से वाक्य स्खलित होने लगे, नेत्रों से आसू गिरने लगा और होठ फड़कने लगे। उसी अवस्था मे यह अब मुझे इस कुमारी अवस्था मे वेश्या की भाति आचरण करने वाली चरित्रहीना से कोई प्रयोजन नही रह गया है—इस प्रकार की शपथपूर्ण प्रतिज्ञा कर अपने निवास-भवन से बाहर निकल पड़ा। अतः इसी प्रसग से मदयन्तिका को ले कर मकरन्द के साथ उसका संयोग कराऊगी। (ऐसा कह कर बाहर जाती है।)

प्रवेशक समाप्त

(तदनन्तर शय्या पर आरूढ मालती (वेशधारी मकरन्द) के साथ लवगिका प्रवेश करती है।)

मकरन्द—लवगिके! क्या बुद्धरक्षिता मे भगवती कामन्दकी ने जिस (कार्य सिद्धि की सफलता दिलाने वाली) नीति को स्थिर किया है, वह सफल हो सकेगी।

लवंगिका—महाभाग को इस विषय मे सन्देह ही क्यों है? बहुत कहने की क्या जरूरत है? जिस तरह यह मजरी (पायल) की झनकार सुनाई पड़ रही है उससे मालूम पड रहा है कि बुद्धरक्षिता किसी बहाने से मदयन्तिका को

जाणामि देणववदेसेण आगोदा वुद्धरक्खिदाए मदअन्तिएत्ति। ता उत्तरीआववारिदो सुत्तलक्खणो चिट्ठ)

(मकरन्दस्तथा करोति)

(ततः प्रविशति मदयन्तिका बुद्धरक्षिता च)

मदयन्तिका—सखि, सत्यमेव परिकोपितो मम भ्राता मालत्या ?
(सहि, सच्च जेव्व परिकोविदो मे भादा मालदीए ?)

बुद्धरक्षिता—अथ किम्। (अह इं)

मदयन्तिका—अहो अत्याहितम्। तदेहि, वामशीलां मालती निर्भर्त्सयावः। (अहो अच्चाहिदं। ता एहि, वामसीलं मालदीं णिब्भच्छेम्ह)

(इति परिक्रामतः)

बुद्धरक्षिता—इदं वासभवनम्। (इदं वासभवणं)

(उभे प्रविशतः)

मदयन्तिका—सखि लवङ्गिके, ज्ञायते प्रसुप्ता ते प्रियसखीति। (सहि लवङ्गिए, जाणीअदि पसुत्ता दे पिअसही त्ति)

लवङ्गिका—सखि, मैना प्रतिबोधय। एपा चिरं दुर्मनायमानेदानीमेवेपन्मन्ये प्रसुप्तेति। अतः शनैरिहैव शयनार्धे उपविश। सहि, माणं पडिवोधेहि। एसा चिरं दुम्मणाअन्दी दाणिं जेव्व ईस मण्णे पसुत्तेति।

---

यहीं आ रही है। तो तुम अपनी चादर से मुख ढक कर निद्रित की तरह लेट जाओ।

(मकरन्द वैसा ही करता है। )

(तदनन्तर मदयन्तिका और बुद्धरक्षिता प्रवेश करती हैं। )

मदयन्तिका—सखी ! क्या सचमुच मालती ने मेरे भाई को क्रोधित कर दिया है ?

बुद्धरक्षिता—और क्या ?

मदयन्तिका—अरे ! यह तो गंभीर चिन्ता की बात है। अतः आओ, प्रतिकूल स्वभाववाली मालती को डाँट-फटकारें।

(ऐसा कहकर दोनों चलने का नाट्य करती हैं। )

बुद्धरक्षिता—यही (मालती का) आवास-कक्ष है।

मदयन्तिका—सखी लवंगिके! मालूम पड़ता है कि तुम्हारी प्यारी सखी सो गयी हैं ?

लवंगिका—सखी ! इन्हें मत जगाओ। यह बेचारी बड़ी देर तक अफसोस

अदो सणिअं इध जेब्ब सअणद्धम्मि उवविस)

मदयन्तिका—(तथा कृत्वा) दुर्मनायते कथमियं वामशीला। (दुम्मणाअदि कहं इअं वामसीला)

लवङ्गिका—कथं नाम नववधूविस्रम्भणोपायाभिज्ञं स्वहं विदग्धं मधुरभाषिण-मरोषणं ते भ्रातरं भर्तारमासाद्य न दुर्मनायिष्यते मे प्रियसखी। (कहं णाम णववहूविस्सम्भणोवाअजाणुअं सडहं विअड्ढं महुरभासिणं अरोसणं दे भादरं भत्तारं आसादिअ ण दुम्मणाइस्सदि मे पिअसही)

मदयन्तिका—पश्य बुद्धरक्षिते, विप्रतीपमुपालब्धाः स्मः। (पेक्ख बुद्धरक्खिदे, विप्पदीवं उवालद्धा म्ह)

बुद्धरक्षिता—विप्रतीपं न वा विप्रतीपम्। (विप्पदीवं ण वा विप्पदीवं)

मदयन्तिका—कथमिव। (कहं विअ)

बुद्धरक्षिता—यत्तावच्चरणपतितो भर्ता न बहुमानितः। अत्र लज्जादोषेणैष जनो नोपालम्भनीयः। यद्यपि प्रियसखि, अभिनववधूविरुद्धरभसोपक्रमस्खलन-वैलक्ष्यविच्छर्दितमहानुभावत्वस्य भ्रातुस्ते वाचागतं किमप्यप्रतिष्ठानम्। तेन

---

में रही, अभी थोडी देर से थोड़ा सोने लगी है। अतः धीरे से इस शय्या के आधे भाग में एक ओर बैठ जाओ।

मदयन्तिका—(वैसा ही करती हुई) यह कुटिल स्वभाववाली अब अफसोस क्यों कर रही है?

लवंगिका—तुम्हारे भाई नव वधू में विश्वास पैदा करनेवाले उपायों के विशेषज्ञ हैं, देखने में सुन्दर हैं, कलाशास्त्र में निपुण हैं, मृदुभाषी हैं, कभी क्रोध नहीं करने वाले हैं ? ऐसे सुयोग्य पति को पाकर मेरी प्रियसखी भला अफसोस क्यों करने लगी।

मदयन्तिका—बुद्धरक्षिते ! देखो। हमें उल्टी बातें सुनाकर दोषारोपण कर रही हो।

बुद्धरक्षिता—उल्टी बातें कर रही हूं या ये उल्टी बातें नहीं हैं।

मदयन्तिका—किस प्रकार?

बुद्धरक्षिता—पैरों पर गिरे हुए पति का जो अतीव सम्मान नहीं कर सकी तो इस प्रसंग में लज्जा दोष के कारण उसको दोष नहीं दिया जाना चाहिए।

यद्यपि हे प्रिय सखी ! नयी-नवेली वधू की इच्छा के विरुद्ध बलात् समागम करने के उपक्रम में मालती के पाद-प्रहार रूप व्यतिक्रम द्वारा असफल होकर

ज्ञायते कृतापराधा उपालम्भनीया वयमिति। (संस्कृतमाश्रित्य) किंच। 'कुसुमसधर्माणो हि योषितः सुकुमारोपक्रमाः। तास्त्वनधिगतविश्वासैः प्रसभमुपक्रम्यमाणाः संप्रयोगविद्वेषिण्यो भवन्ति।' एवं किल काममूत्रकारो मन्त्रयते। (जं दाव चलगरहिदो भत्ता ण बहुमाणिदो। एत्थ लज्जादोसेण एसो जणो ण उवालम्भणिज्जो जं वि पिअसहि, अहिणववहूविहड्डरहसोवक्कमक्खलणवेल्लवलविच्छडिदमहाणुहावत्तणस्स भट्ठुणो दे वाआमत्तं कि वि अप्पडिट्ठाणं। तेण जाणीअदि किआवराहा उवालम्भणिज्जा ह्योत्ति एवं किल कामसुत्तआरा मन्तेन्ति)

लवंगिका—गृहे गृहे पुरुषाः कुलकन्यका उद्वहन्ति। न च कोऽपि लज्जाप्रसाधनमनपराधमुग्धस्वभावं कुलकुमारीजनं प्रभवामीति वागनलेन प्रज्वलयति। एते खलु ते आमरणसंभ्रियमाणदुःसहपरगृहनिवासवैराग्यकारिणो हृदयशल्यनिक्षेपा महापरिभवाः। येषां कृते स्त्रीजन्मलाभं जुगुप्सन्ते बान्धवाः। (घरे घरे पुरिसा कुलकण्णकाओ उव्वहन्दि। ण अ को वि लज्जापसाहण अणवरद्धमुद्धसहावं कुलकुमारीजणं पहवामि त्ति वाआणलेण पज्जालेदि। एदे क्खु दे आमलणसंभरिज्जन्तदूसहपरघरणिवासवेरग्गकारिणो हिअअसल्लणिक्खेवा महापरिहवा। जाणं किदे इत्थिआजम्मलाहं जुउच्छन्दि बान्धवा)

---

धैर्य छोडनेवाले आप के भाई ने जो अनिवर्चनीय रूप से मर्यादा का उल्लंघन किया, उससे मालूम होता है कि हम लोगों का ही अपराध है और हमें ही दोष देना चाहिए। (संस्कृत भाषा का आश्रय लेकर) स्त्रियाँ कुसुम के समान कोमल प्रकृति वाली होती हैं अतः प्रथम समागम के आरम्भ में उनके साथ उपायों द्वारा ही व्यवहार करना चाहिए। विश्वास प्राप्त करने वाले पुरुषों द्वारा प्रथम व्यवहार में बलात् समागम का उपक्रम करने से वे समागम सुख के प्रति विद्वेष करने लग जाती हैं। ऐसा कामसूत्रकार (महर्षि वात्स्यायन) का कथन है।

लवंगिका—घर-घर में पुरुष गण अपनी कुल कन्याओं का विवाह करते हैं किन्तु कोई भी लज्जा रूप भूषण से अलंकृत, निरपराध एवं सुन्दर स्वभाववाली कुल कन्या को मैं उसका सब कुछ कर सकता हूँ—ऐसा मानकर वचनरूपी अग्नि से सन्तापित नहीं करता। यह गम्भीर तिरस्कार छाती के ऊपर कील गाड़ने के समान मृत्यु पर्यन्त स्मरण करने पर कसकता रहता है और पति के घर में निवास करने की अनिच्छा पैदा करनेवाला है, इसी के कारण स्त्री के पिता आदि बान्धवगण स्त्री (कन्या) के जन्म लाभ (कन्या की उत्पत्ति) की निन्दा करते हैं।

मदयन्तिका—बुद्धरक्षिते, अतिम्लाना प्रियसखी लवङ्गिका। अतिमहान्कोऽपि मे भ्राता वागपराधः कृतः। (बुद्धरक्खिदे, अदिदूम्मिदा पिअसही लवङ्गिआ। अतिमहान्तो को वि मे भादुणा वाअवराहो किदो)

बुद्धरक्षिता—अथ किम्। श्रुतमेवास्माभिर्न मे साम्प्रतमनया कौमारवर्धक्या प्रयोजनमि'ति सशपथं कृत्वा वासभवनान्निर्गतः। (अह इं। सुदं जेव्व अम्हेहिं ण मे सपदं इमाए कोमारचइडईए पओअणं त्ति ससपहं पइण्णं काऊणं वासभवणादो णिग्गादो)

मदयन्तिका—(कर्णौ पिधाय) अहो! अतिप्रम। अहो! प्रमादः। सखि लवङ्गिके, असमर्थास्मि ते मुख साम्प्रतं द्रष्टुम्। तथापि प्रभवामीति किंचिन्मन्त्रयिष्ये। (अम्हहे अदिक्कमो। अहो पमादो। सहि लवङ्गिए, असमत्थम्हि दे मुहं संपदं दट्ठुं। तह वि पहवामि त्ति किं वि मन्तइस्सं)

लवङ्गिका—स्वाधीनस्तेऽयं जनः। (साहीणो दे अअं जणो)

मदयन्तिका—तिष्ठतु तावन्मम भ्रातुर्दुःशीलताप्रतिष्ठानं च। युष्माभिरपीदृशोऽप्येष साम्प्रतं यथाचित्तमनुवर्तनीयो येन भर्तैव इति। यूयमस्यानभिजाताक्षराधिक्षेपोपालम्भस्य यन्मूलं तत्र जानीथ। (चिट्ठदु दाव मह भादुणो दुस्सीलदा अप्पडिट्ठाणं अ। तुम्हेहिं वि ईदिसो वि एसो संपदं अहचित्तं अणुवट्टणीओ

---

मदयन्तिका—बुद्धरक्षिता! हमारी प्रियसखी लवंगिका बहुत मुरझाई हुई है। क्या मेरे भाई ने कुछ कठोर बात करने का अपराध किया है।

बुद्धरक्षिता—और क्या? मैंने भी सुना है कि—कौमार्य अवस्था में ही (वेश्याओं की भांति) चरित्रहीन इस (मालती) से अब मेरा कोई प्रयोजन नहीं है—ऐसी शपथपूर्वक प्रतिज्ञा करके वह निवास-कक्ष से बाहर निकल आये हैं।

मदयन्तिका—(दोनों कानों को बंद करके) अरे! यह तो (उन्होंने) मर्यादा का उल्लंघन किया है। अरे! यह तो बड़ी असावधानी की है। सखी लवंगिका! मैं तो अब तुम्हारा मुख देखने में भी असमर्थ हो गयी हूँ। फिर भी मैं इस मामले में कुछ कर सकूंगी—ऐसा मानकर कुछ परामर्श देना चाहती हूँ।

लवंगिका—मैं तो तुम्हारे अधीन ही हूँ।

मदयन्तिका—मेरे भाई की दुःशीलता एवं अप्रतिष्ठाजनक बातों को रहने दो। (उन पर ध्यान मत दो) ऐसा (दुःशील एवं मर्यादालंघन करने वाला) होने पर भी तुम लोगों को उनकी चित्तवृत्ति का अनुसरण तो करना ही चाहिए,

जेण भत्ता एसो त्ति। तुम्हे इमस्स अणहिआअअस्सर।हिक्खेवोवालम्भस्स जं मूलं तं ण जाणह)

लवङ्गिका—कथं वयमसज्जानीमः। (कहं अम्हे असन्तं जाणोमो)

मदयन्तिका—यदिदानीं तस्मिन्महानुभावे माधवे किमपि किल मालत्या वाङ्मात्रमासीत्स एष सर्वलोकस्यातिभूमिं गतः प्रवादः। तत्खल्वेतद्विजृम्भते। तत्प्रियसखि, यथैष भर्तुरुपेक्षाभिनिवेशो निरवशेषो हृदयादुद्ध्रियते तथा कुरु। अन्यथा महान्प्रमाद इति ज्ञातं भवतु। निष्कम्पदारुणासु कुलकन्यकासु दूनयति हृदयं मनुष्याणामीदृशाद्दुरभिषङ्गादिति जानय। मा भण मदयन्तिकया कथितमिति। (जं दाणिं तस्सिं महाणुहावे माहवे किं वि किल मालदीए वाआमेत्तं आसी सो एसो सव्वलोअस्स अदिभूमिं गदो पवादो। तं क्खु एवं विअम्भदि। ता पिअसहि, जह एसो भत्तुणो उवेक्खाहिणिवेसो णिरवसेसो हिअआदो उद्धरिअदि तह करेहि। अण्णहा महन्तो पमादो त्ति जाणीदं होदु। णिक्कम्पदारुणासु कुलकण्णकासु दूनावेदि हिअअं माणुसाणं ईरिसादो दुरहिसंगादो त्ति जाणह। मा भण मदअन्तिआए कहिदं त्ति)

लवङ्गिका—अयि असंबद्धलोकप्रवादमोहिते, अपेहि। न त्वया सह मन्त्रयिष्ये। (अइ असंबद्धलोअप्पवादमोहिदे, अवेहि। ण तुए सह मन्तइस्सं)

---

क्योंकि यह पति हैं। इस प्रकार उनके बयोमनीय बातों द्वारा दोषारोपण करने का जो (मूल) कारण है, उसे तुम लोग नहीं जानती हो।

लवंगिका—हम लोग उस छिपे हुए कारण को जान ही कैसे सकती हैं।

मदयन्तिका—इस समय उन महानुभाव माधव में मालती का जो वाचिक प्रेम सुना जाता है, वही प्रवाद के रूप में सभी लोगों के बीच खूब फैल गया है। वही उनके मुख से इस प्रकार प्रकट हुआ है। इसलिए हे प्रियसखी! मालती के हृदय से अपने पति की उपेक्षा का क्रोध जिस प्रकार निकल कर समाप्त हो जाय वैसा करो नहीं तो बड़ा ही अनर्थ हो जायगा—इसे समझ लो। पति की अनुकम्पा अथवा सहानुभूति न प्राप्त कर निश्चेष्ट और क्रूर प्रकृति की कुल-कन्याओं में अनपेक्षित आचरण इस प्रकार के दोषपूर्ण परपुरुषानुराग के कारण मनुष्यों के हृदय को पीड़ित करता है—इसे जान लें। मदयन्तिका ने ऐसा कहा है—यह मालती को मत बतलाना।

लवंगिका—अरी असंगत लोकापवाद से मोहित होने वाली! तुम यहाँ से चली जाओ। मैं तुम्हारे साथ कोई बातचीत नहीं करना चाहती।

मदयन्तिका—सखि, प्रसीद। अथवा न यूयं स्फुट भणितास्तिष्ठथ। किंच वयं सत्यमेव माधवैकमयजीवितां मालती जानीमः। केन वा कठोरकेतकीगर्भविभ्रमावयवदौर्बल्यनिर्वतितसुन्दरत्वविशेषं माधवस्वहस्तनिर्मितबकुलावलीविरचितकण्ठावलम्बनमात्रसजीवनं मालत्या माधवस्य च प्रभातचन्द्रमण्डलापाण्डुरपरिक्षामरणीयदर्शनं न विभावितं शरीरम्। किंच तस्मिन्दिवसे कुसुमाकरोद्यानपर्यन्तरथ्यामुखसमागमे सविभ्रमोल्लसितकौतूहलोत्फुल्लपरिसरोद्वेल्लमानसविलासमसृणस्निग्धसंचरणचारतारकाविजृम्भमाणानङ्गशृङ्गाराचार्यसर्वागमोपदेशनिर्मितवैदग्ध्यमुग्धमनोहरा मया न निरूपिता एतयोर्दृष्टिसंभेदाः। किंच मम भ्रातृदानिवृत्तान्तं श्रुत्वा तत्क्षणोद्वृत्तगम्भीरोद्वेगव्यतिकरान्धकारितम्लायमानदेहशोभयोरुद्दर्तमानमूलबन्धनमिव न लक्षितं हृदयम्। किंच मयैतदपर विस्मृतम्। (सहि, पसीद। अहवा ण तुम्हे फुडं भणिदाओ चिट्ठह। किअ अम्हे सच्चं माहवेक्कमअजीविदं मालदिं जाणीमो। केण वा कठोरकेअईगब्भविब्भमावअवदोब्बल्लणिव्वट्टिदसुन्दरत्तणविसेसं माहवसहत्थणिम्माविदबउलावलीविरइदकण्ठावलम्बणमेत्तसंजीवणं मालदीए माहवस्स अ पहादचन्दमण्डलापाण्डुरपरिक्खामरमणिज्जदंसणं ण विभाविदं सरीरं। किअ तस्सि दिअसे कुसुमाअरुज्जाणपेरन्तरच्छा-

---

मदयन्तिका—सखी, प्रसन्न हो। मैं ने तुमसे सब बातें साफ-साफ नहीं बतायी हैं। रुको। हम लोग तो सचमुच मालती को एकमात्र माधवमय जीवन वाली जानती हैं। कौन व्यक्ति नहीं जानता कि, पूर्ण विकसित केतकी के पुष्प के मध्यवर्ती भाग की भांति शुक्ल वर्ण वाले मालती के हाथ-पैर आदि नितान्त दुर्बल हो गये हैं, जिससे उसके शरीर की सुन्दरता और भी बढ़ गयी है। माधव ने अपने ही हाथों से जिस मौलसिरी की माला की रचना की थी, उस माला को ही मालती अपने कण्ठ में धारण कर अपने जीवन की रक्षा कर सकी है। और माधव का शरीर भी प्रभातकालीन चन्द्रमा की भांति किंचित् पीला एवं श्वेत हो गया है। तथा अतीव दुबला होने के कारण सुन्दर दिखाई पड़ रहा है—ऐसा किसने नहीं देखा है। और भी सुनो। उस दिन कुसुमाकर उद्यान के एक कोने में सड़क के अग्रभाग में जब दोनों का सम्मिलन हुआ और उनके नेत्र एक दूसरे से मिले तो क्या मैंने नहीं देखा था कि उस क्षण नीले कमल के समान उनके युगल नेत्र विविध प्रकार के विहारों से मुक्त होकर बार बार मुंद जाते थे और फिर उत्कण्ठा के साथ उत्फुल्ल हो कर चचल बन जाते थे। बहुतेरे विलास एवं कोमल सचरण से मनोहर उनके नेत्रों की पुतलियाँ भी उनकी हृदयगत काम-भावना को प्रकट कर रही थी और वे ऐसी सुन्दर एवं मधुर प्रतीत हो रही थी मानो शृंगार रस के आचार्य कामदेव के

मुहसमाअमे सविब्भमुल्लसिदकोदूहलुप्फुल्लपरिसक्खेल्लमाणसविलासमसिण-सिणिद्धसंवरणवाहत्तारआविअम्भमाणणङ्ग सङ्गारआरिअसव्वाअमोपदेसणिम्मा-विदविअद्धमुद्धमणहारा। मए ण णिव्विदा इमाणं दिट्ठिसंभेदा। किअ मह भाडुणो दाणमुत्तन्दं सुणिअ तक्खणुव्वत्तगम्भीरुव्वेअव्वइअरप्पआरिअमिलाअन्त-देहसोहाणं उक्खण्डिअमाणमूलबन्धणं विअ ण लक्खिअं हिअअं। किं अ मए एवं अवरं विसुमरिदं)

लवङ्गिका—किमिदानीमपरम्। (किं दाणिं अवरं)

मदयन्तिका—यत्खलु मम जीवितप्रदायिनो महानुभावस्य चेतनाप्रति-लम्भप्रियनिवेदिकाया मालत्या भगवतीविदग्धवचनोपन्यासचोदितेन हृदयं जीवितं च माधवेन पारितोषिकत्वेन स्वयंग्राहे नियुक्तम्। अथ लवङ्गिके, त्वया खल्वेवं भणितं 'प्रतीष्टः खलु नः प्रियसख्या अयं प्रसाद' इति। (जं क्खु मह जीविदप्पदाइणो महाणुहावस्स चेदणापडिलम्भपिअणिवेदिआए मालदीए भअवदीविअद्धवअणोवण्णासचोदिदेण हिअअं जीविदं अ माहवेण पारि-दोसिअत्तणेण सअंगाहे णिउत्तं। अह लवङ्गिए, तुए क्खु एव्वं भणिदं 'पिडिच्छिदो क्खु णो पिअसहीए अअं पसादो' त्ति)

लवङ्गिका—सखि, कतमः पुनः स महानुभाव इति विस्मृतमिव मया। (सहि, कवमो उण सो महाणुहावो त्ति विसुमरिदं विअ मए)

---

सभी शास्त्रों के उपदेशों द्वारा रचे गये नैपुण्य को ही प्रकट रही हैं। और भी सुनो। हमारे भाई (नन्दन) की दानशीलता की चर्चा सुनकर मालती और माधव में तत्क्षण ही महान् विषाद का ऐसा आवेग उठ पड़ा, जिससे उनके मनोहर शरीर की कान्ति ऐसी मलिन पड़ गयी मानों अन्धकार से व्याप्त हो गयी हो और उनके हृदय का मूल बन्धन छिन्न भिन्न हो गया हो। और क्या मैं यह एक दूसरी बात भी भूल गयी हूँ।

लवंगिका—कौन सी अब दूसरी बात है (उसे भी सुना डालो। )

मदयन्तिका—जिन्होंने हमारे जीवन की रक्षा की उन महानुभाव (मकरन्द) के मूर्च्छा से होश में आने का प्रिय समाचार जब मालती ने सुनाया तब भगवती कामन्दकी के निपुण वचन द्वारा उत्प्रेरित होकर माधव ने अपना हृदय और जीवन, मालती की अपनी अभिलाषा के अनुसार, पारितोषिक के रूप में अर्पित कर दिया। और लवंगिके! (उस क्षण) तुमने (भी) यह कहा था कि हमारी प्रिय सखी ने इस अनुग्रह दान को स्वीकार कर लिया है।

लवंगिका—वे महानुभाव कौन है—यह तो मैं जैसे भूल सी गयी हूँ।

मदयन्तिका—सखि, स्मर। येन तस्मिन्दिवसे विकटदुष्टश्वापदविनिपातगोचरं गताऽशरणा सुलग्नसंनिहितेन पीवरभुजस्तम्भेन संभाविता निष्कारणबान्धवेन सकलभुवनैकसारनिजदेहोपहारसाहसं कृत्वा परिरक्षितास्मि। येन च दृढविकटमांसलोत्तानपरिणाहिवक्षःस्थललाञ्छनजर्जरितजपापीडधारिणा करुणाघनेन मत्कृतेऽपि निमज्जत्सकलनखनिकायवज्रपञ्जरप्रहारो मारितश्च स दुष्टश्वापदमहाराक्षस इति। (सहि, सुमर। जेण तस्सिं दिअसे विअडदुट्ठसावदविणिवादगोअरं गदा असरणा सुलग्गसण्णिहिदेण पीअरभुअत्थम्भेण संभाविदा णिक्कारणबन्धवेण सअलभुवणेक्कसारणिअदेहोवहारसाहसं कदुअ परिरक्खिदम्हि। जेण अ दिढविअडमंसुलुत्ताणपरिणाहिवच्छत्थललञ्छणजज्जरिदजवापीडधारिणा करुणाघणेण मम किदे वि णिमज्जन्तसअलणहणिआअवज्जपञ्जरप्पहारो मारिदो अ सो दुट्ठसावदमहारक्खसो त्ति)

लवङ्गिका—हुं, मकरन्दः। (हुं, मअरन्दो)

मदयन्तिका—(सानन्दम्) सखि, किं भणसि। (सहि, किं भणासि)

लवङ्गिका—ननु भणामि मकरन्द इति। (सस्मितं शरीरमस्याः स्पृशन्ती संस्कृतमाश्रित्य) (णं भणामि मअरन्दो त्ति)

---

मदयन्तिका—सखी! स्मरण करो! उस दिन मैं भयङ्कर विकट, दुष्ट हिंस्र जन्तु (सिंह) द्वारा आक्रान्त हो गयी थी। कोई भी हमारी रक्षा करनेवाला नहीं था। उस अवसर पर जिन्होंने समीप आकर और बिना किसी कारण के ही बान्धव बनकर, सम्पूर्ण संसार के एकमात्र सर्वस्व अपने मनोहर शरीर को उपहार रूप में समर्पित करने का साहस दिखाया और मेरी रक्षा की। कठोर, भयङ्कर, मांसल, बल-वीर्य सम्पन्न और सुविस्तृत वक्षःस्थल (छाती) पर बिखरे हुए गुड़हल के पुष्प की तरह बाघ का कठोर दन्ताघात, विकटाकार एवं पैने समग्र नखों का वज्रप्रहार सहन करते हुए जिन करुणाघन ने मेरे लिए अदम्य साहस के साथ उस पापी महाराक्षस को मार गिराया था (क्या तुम उन्हें नहीं जानती हो।)

लवंगिका—हूं, मकरन्द जी।

मदयन्तिका—(आनन्दपूर्वक) सखी! तुम क्या कह रही हो?

लवंगिका—अरी, मैं कह रही हूं कि वे मकरन्द जी।

यथं तथा नाम यदात्थ किं वदाम्ययं तु कस्माद्विकलः कथान्तरे।
कदम्बगोलाकृतिमाश्रितः कथं विशुद्धमुग्धः कुलकन्यकाजनः॥१॥

मदयन्तिका—(सलज्जम्) सखि, किं मामुपहससि। ननु भणामि। निर्वापयति तादृशस्यात्मनिरपेक्षव्यवसायिनः कृतान्तकवलीक्रियमाणजीवितबलात्कार-प्रत्यानयनगुरूपकारिणो जनस्य संकथामात्रस्य नामग्रहणं स्मरणं च। तथा च त्वयापि गाढगुरुनखप्रहारवेदनारम्भविह्वलितशरीरसमुल्लसत्स्वेदसलिलोद्गमो मोहमुकुलीक्रियमाणनेत्रनीलोत्पलयुगलो भूमिविगलितासियष्टिविष्टम्भधैर्य-प्रतिधारितशरीरभारः प्रत्यक्षीकृत एव मदयन्तिकामात्रविच्छर्दितमहार्घजीवितो महानुभाव इति। (स्वेदादीन्विकारान्नाटयति) (सहि, किं मं उवहससि। णं भणामि। णिव्वावेदि तारिसस्स अप्पणिरवेक्खववसाइणो किदन्तकवलिज्जन्त-जीविदबलामोडिअपच्चाणअणगुरुओवआरिणो जणस्स संकहामेत्तस्स णामग्गहणं सुमरणं अ। तह अ तुए वि गाढगुरुणहप्पहारवेअणारम्भविह्मलाविअसरीरसंगलिदसेअसलिलुग्गमो मोहमउलाअन्तणेत्तकन्दोट्टजुअलो भूमिविगलिदासिअट्ठि-विट्ठम्भधीरपडिधारिअसरीरभारो पच्चक्खीकिदो जेव्व मदअन्तिआमेत्त विच्छड्डिअमहग्घजीविदो महाणुहावो त्ति)

---

(मुसकराकर उसके शरीर का स्पर्श करती हुई संस्कृत भाषा में)

आप जैसा कह रही हैं, हम वैसी ही हैं (यह स्वीकार करती हूं।) किन्तु मैं क्या कहूं? निर्दोष एवं सरल स्वभाववाली यह कुलकन्या (तुम) बातचीत के बीच में सहसा क्यों विह्वल हो गयी और कदम्ब के पुष्प के समान (पुलकित) हो गयी॥१॥

मदयन्तिका—(लज्जापूर्वक) सखी! तुम मेरा उपहास क्यों कर रही हो? अरे मैं कहती हूं कि जो अपने जीवन की रक्षा की चिन्ता न करके मेरे जीवन की रक्षा करने में प्रवृत्त हो गये और यमराज जब मुझे अपना ग्रास बनाने के लिए तत्पर थे तो जिन्होंने बलपूर्वक उनसे छीन कर मेरे लिए अति गंभीर उपकार किया, बातचीत के बीच में ऐसे परोपकारी का नाम लेना एवं स्मरण करना अपने चित्त को शीतल करता है। और तुमने भी तो प्रत्यक्ष देखा था कि कठोर और विशाल बाघ के नखों के आघात से जो वेदना आरंभ हुई तो उनका शरीर विह्वल हो गया और उसमें पसीने की धारा बह निकली। फिर मूर्च्छा के आवेग में नीले कमल के समान उनके युगल नेत्र मुकुलित (बंद) हो गये और भूतल पर टिकी हुई तलवार रूपी छड़ी पर धीरे-धीरे शरीर का भार सम्हालते हुए वह किसी प्रकार खड़े रहे। इस प्रकार उस महान् पुरुष ने केवल मदयन्तिका के लिए अपने बहुमूल्य जीवन का

**बुद्धरक्षिता**—(शरीरमस्याः स्पृशन्ती) अस्वस्थशरीरे, किं वाचा। दर्शितं शरीरेण मकरन्दसमागमौत्सुक्यम्। (असत्थसरीरे, किं वाआ। दंसिदं सरीरेण मअरन्दसमाअमोच्छुक्कं)

**मदयन्तिका**—(सलज्जम्) सखि, अपेह्यपेहि। उद्भिन्नास्मि सहवासिन्या मालत्या। (सहि, अवेहि अवेहि। उब्भिण्णम्हि सहवासिणीए मालदीए)

**लवङ्गिका**—सखि मदयन्तिके, वयमपि ज्ञातव्यं जानीमः। तत्प्रसीद। विरम व्यपदेशात्। एहि। विस्रम्भगर्भकथाप्रबन्धरसं सुखं तिष्ठामः। (सहि मदअन्तिए, अम्हे वि जाणिदव्वं जाणीमो। ता पसीद। विरम व्ववदेसादो। एहि। विस्सम्भगब्भकहाप्पबन्धरसं सुहं चिट्ठम्ह)

**बुद्धरक्षिता**—सखि, शोभनं लवङ्गिकया भणितम्। (सहि, सोहणं लवङ्गिआए भणिदं)

**मदयन्तिका**—विधेयास्मि साम्प्रतं सखीनाम्। (विधेअम्हि संपदं सहीणं)

**लवङ्गिका**—यद्येवं तत्कथय कथं नु ते कालो गच्छतीति। (जइ एव्वं ता कहेहि कहं णु दे कालो गच्छदि त्ति)

**मदयन्तिका**—निशामय प्रियसखि, मम बुद्धरक्षितापक्षपातप्रत्ययेन प्रथममेव तस्मिञ्जनेऽविरलकौतूहलोत्कण्ठामनोहरं हृदयमासीत्। ततो विधिनियोजित-

---

परित्याग करने का निश्चय किया था। (ऐसा कहकर स्वेद और रोमाच आदि काम विकारों का नाट्य करती है।)

**बुद्धरक्षिता**—(उसके शरीर का स्पर्श करती हुई) हे अस्वस्थ शरीर वाली! बात करने से क्या लाभ है? तुमने अपने शरीर से मकरन्द के साथ समागम की उत्कण्ठा दिखलाई है।

**मदयन्तिका**—(लज्जापूर्वक) सखी! चलो भागो। हटो। मैं तो सह-वासिनी मालती के कारण रोमांचित हो गयी हूं।

**लवंगिका**—सखी मदयन्तिके! हम लोग भी कुछ जानने योग्य बातें जानते हैं। तो तुम अप्रसन्न न हो। छल-प्रपंच भरी बातें बंद करो। आओ। विश्वास-भरी बातचीत के सन्दर्भ का रसास्वादन करते हुए सुखपूर्वक बैठें।

**बुद्धरक्षिता**—सखी! लवंगिका ने ठीक ही कहा है।

**मदयन्तिका**—मैं अपनी दोनों सखियों के अधीन हूं।

**लवंगिका**—यदि ऐसा ही है तो बताओ कि तुम्हारा समय अब कैसे कटता है।

**मदयन्तिका**—प्रियसखी! सुनो न। उन महानुभाव के प्रति बुद्धरक्षिता के पक्षपात पूर्ण कथन में विश्वास करके मेरा प्रेम पहले ही अत्यधिक हो चुका था

चिरनिर्वृत्तदर्शना भूत्वा दुर्वारदारुणायासदुःखसंतापदह्यमानचित्तविघटमान-जीविताशा दूरविजृम्भितातुवंसर्वाङ्गप्रज्वलनमदनहुतवहोद्दामदाहदुःसहायास-दुर्मनायमानपरिजना प्रत्याशाविमोक्षमात्रसुलभमृत्युनिर्वाणप्रतिकूलबुद्धरक्षिता-वचनविवर्धितावेगव्यतिकरविसंस्थुलेमं जीवलोकपरिवर्तमनुभवामि। संकल्प-चिन्तायां स्वप्नान्तरेषु च मनोरथोन्मादमोहिता पश्यामि तं जनम्। तथा च प्रियसखि, मुहूर्तमुद्धविस्मयविसंस्थुलोद्वेल्लविस्तारिप्रान्तनालरक्तनेत्रपुण्डरी-कताण्डवोद्भटप्ररूढमैरेयमदघूर्णनशीलं निर्वर्णयति। किंच कवलितारविन्द-केसरकषायकण्ठकलहंसघोषघर्घरस्खलितगम्भीरभारतीभरितकर्णविवरं प्रिये मद-यन्तिके, इति मां व्याहरति। अथ प्रभवन्निवोत्तरीयाञ्चलावलम्बनपराभवेन ससंभ्रमोत्तरङ्गमधमायमानहृदयां समुत्त्रासयति। सहसा विसर्जितापसृतत-रक्षणकठोरकमलदण्डायमानबाहुबन्धनापवारितपयोधरोद्गमां विघटमानविह्वल-मेखलावलयसंधार्यमाणपीवरोरुप्रतिपिद्धविप्रतीपगमना प्रतिकूलवादिनीमपि सर्वादरप्रयत्ननिर्वलितमुहुर्नकोपोपरागदुःखपरपीकृतहृदया स्निग्धपुनरुक्तपर्यस्त-लोचनविभावितादोषचित्तसारामुपहस्य द्विगुणबाहुदण्डावेष्टननिश्चेष्टनियमिता प्रियसखि, प्ररूढशार्दूलकठोरकररुहप्रहारविकटपत्रावलीप्रसाधनोत्तानवक्षः-

---

और उनके प्रति अविरत कौतूहल, उत्कण्ठा एवं अभिलाषा से मेरा सुन्दर हृदय भरा हुआ था तदनन्तर भाग्यवश चिरकाल के पश्चात् उनका दर्शन प्राप्त हुआ जिससे अनिवार्य एवं भयंकर वेदना के दुःख तथा सन्ताप से हृदय जलने लगा और जीवन की आशा दूर होने लगी। अत्यन्त वृद्धि प्राप्त, आश्चर्य एवं सर्वांगों को सन्तप्त करनेवाले कामाग्नि के दारुण दाह से मैं अत्यन्त कष्ट पाने लगी, जिससे हमारी परिचारिकाएं भी अतीव दुःखी हो गयीं। इस प्रकार उन प्रियतम की प्राप्ति की आशा का परित्याग करने मात्र से ही सुलभ मृत्यु-रूप सुख की अभि-लाषिणी बन गयी थी किन्तु बुद्धरक्षिता के उक्त सुख के प्रतिकूल वचनों से (आशाजनक बातों से) मेरा उद्वेग पुनः बढ़ गया है जिससे अस्थिर चित्तवाली मुझको इस जीव लोक के परिवर्तन चक्र का अनुभव होने लगा। कल्पना एवं स्वप्न के बीच में केवल अपनी इच्छा से कामोन्माद की स्थिति आ जाती है और मैं उन महानुभाव को देखने लगती हूँ। हे प्रियसखी! उसी प्रकार से, कुछ क्षणों तक धारण किए गए आश्चर्य से विह्वलतापूर्वक इधर उधर चलनेवाले, विस्तृत, एवं एक छोर पर रक्तिम, नालों से युक्त लाल नेत्र-कमलों को अतीव चंचलतापूर्वक नचाने में श्रेष्ठ मदिरा की मत्तता को प्रकट करते हुए नाचते हुए नेत्रों से वे भी

स्थलनिष्ठुरनिवेशननिःमहां कृत्वा सावेगविधूतमस्तकाग्रविद्रवरी।निर्दिन्नकरपरिग्रहपुञ्जीकृतोत्क्षिप्तनिचलमुग्धावयवस्वच्छन्दविलसितविदग्धवदनकमलोपामगण्डमूलचिरविनिहितप्रस्फुरत्कुञ्चिताधरसमुद्गममनोहरसहर्षसरभसकम्पितमनोहरोत्कम्पितशरीरशोभामुल्लसितसाध्वसमानन्दविषमसंभ्रममनोहरसकलमन्थरभ्रमच्चेतनाकिमपि किमपि दुर्विनयसाहसानुरूपमध्यवसायो मामभ्यर्थयते। एवं नाम प्रियसखि! समस्तं सर्वमनुभूय ततो झटिति प्रतिबुद्धा शून्यारण्यसन्निभं पुनरपि मन्दभागिनी विभावयामि जीवलोकमिति। (णिसामेहि पिअसहि, मम बुद्धरविसंवादपच्चवादप्पच्चएण पढमं जेव्व तस्सि जणे अविरलकोदूहलुक्कण्ठामणोहरं हिअअं आसी। तदो णिहिणिओइअविरणिउत्तदंसणा भविअ दुव्वारदारुणाआसदुप्पसंवादवज्जन्तचित्तविहडन्तजीविदासा दूरविअम्भिआपुव्वसव्वङ्गप्पज्जलणमअणहुदवहुद्दामदाहदूसहाआस दुम्मणाअन्तपरिअणाप्पच्चासाविमोक्खसमेत्तसुलहमिसुणिच्चाणपडिऊलवुद्धरविसंदावअणविवड्ढिआवेअवइअरविसंठुला इमं जीवलोअपरिवत्तं अणुहोमि। संकप्पचिन्ताए सिविणन्तरेसु अ मणोरहुम्मादमोहिहा पेक्खामि तं जणं। तह अ पिअसहि, मुहुत्तं उद्धुअविहुअविसंठुलुव्वेल्लिरयारिपेरन्तणावरत्तणेत्तपुण्डरीअताण्डवउब्भडपल्हत्थेरेअमय-

---

मुझे देखते हैं। और भी, सुनो। उन्होंने मुझे जब 'प्रिये मदयन्तिके!' इस प्रकार कहा तो ऐसा लगा मानो कमलों का मकरन्द भक्षण करने से मनोहर कण्ठ स्वर वाले कलहंस के स्वर को भांति अस्पष्ट, गद्गद, गम्भीर, उच्च एवं अकम्पित स्वर से हमारे कानों के छिद्रों को परिपूर्ण कर देते हैं। इसके बाद तो वह स्वामी के समान होते हुए मेरे उत्तरीय (ओढ़नी) वस्त्र के गिर पड़ने पर जब उसे उठाकर सम्भाल लेते हैं तो अपने मन में तिरस्कार की भावना से कम्पन युक्त मेरे हृदय में "धम धम", इस प्रकार का शब्द होने लगता है और ऐसी अवस्था में वह मुझे अतीव चकित कर देते हैं।

यकायक मेरे पहने हुए वस्त्र को खींच कर वह छोड़ देते हैं तो मैं लज्जित होकर भागने लगती हूं, उस समय वह अपने कठोर कमल नाल की भांति आचरण करनेवाले भुजदण्डों से मुझे आलिंगन पाश में बांध लेते हैं जिससे हमारे स्तन मण्डलों की ऊंचाई आच्छादित हो जाती है। हमारी विस्तृत करधनी खुलकर नीचे सरक पड़ती है जिससे हमारी दोनों स्थूल जंघाएँ कांप उठती है और फिर तो उनका अनभिलषित मेरा गमन रुक जाता है। उस क्षण जब मैं प्रतिकूल बोलने लगती हूं तो उनके सभी प्रकार के आदर युक्त प्रयत्नों से, कुछ क्षणों तक रोष और

वर्धसे। (जअ भअवदि कज्जणिहाणे! जअ मअरन्दणन्दण माहव पुण्णचन्द, दिट्ठिआ वड्ढसि)

(सर्वे सस्मितं पश्यन्ति)

लवङ्गिका—त्वदीयकार्यमपि चैतस्मिन्संपूर्णम्। अतः सर्वप्रकारमहोत्सवे नृत्यति। (तदीअकज्जं वि अ एतस्सिं संपूरिदम्। अदो सव्वप्पआरमहूसवे णच्चइ)

कामन्दकी—एवमेतत्। अस्ति वा कुतश्चिदेवम्भूतं महाद्भुतं विचित्ररमणीयोज्ज्वलं प्रकरणम्?

सौदामिनी—इदमत्र रामणीयकं यदमात्यभूरिवसुदेवरातयोश्चिरात्संपूर्णोऽयमितरेतरापत्यसंबन्धरूपो मनोरथः।

मालती—(स्वगतम्) तत्कथमिव। (तं कहं विअ)

मकरन्दमाधवौ—(सकौतुकम्) भगवति, अन्यथा वस्तु प्रवृत्तम्, अन्यथा वचनपर्यायः।

लवङ्गिका—(जनान्तिकम्) भगवति, किं प्रतिपत्तव्यम्। (भअवदि, किं पडिवज्जिदव्वं)

---

(माधव से) हे मकरन्द को आनन्दित करने वाले! माधव! पूर्ण चन्द्रमा के समान आनन्ददायी! तुम्हें बधाई है।

(सभी लोग मुस्कराते हुए देखते हैं।)

लवंगिका—माधव के साथ मकरन्द का मनोरथ भी सफल हो गया। अतएव सब प्रकार से महोत्सव है और यह बन्धुवर्ग नाचता है।

कामन्दकी—ऐसा ही हो। कहीं पर इस प्रकार का महान विस्मयों से भरा हुआ विचित्र किन्तु मनोहर और परिणाम में उज्ज्वल प्रसंग है क्या?

सौदामिनी—इसमें यह सुन्दरता भी है कि अमात्य भूरिवसु और देवरात की सन्तानों का एक दूसरे से सम्बन्ध हो जो यह चिरकाल की अभिलाषा थी वह भी पूरी हो गयी।

मालती—(अपने आप) यह कैसी बात है?

मकरन्द और माधव—(कौतूहल के साथ) भगवती! घटना ही किसी अन्य प्रकार से घटित हुई और भगवती सौदामिनी की बात कुछ अन्य प्रकार की है।

लवंगिका—(केवल कामन्दकी को सुना कर) भगवती! अब क्या उत्तर देना चाहिए।

कामन्दकी—(स्वगतम्) सम्प्रति मदयन्तिकासंबन्धेन नन्दनावग्रहाप्रत्ययस्तः शङ्का. खलु वयम्। (प्रकाशम्) वत्सौ, न खल्वन्यथा वस्तु प्रवृत्तम्, अन्यथा वचनमस्या.। यत. श्रावकावस्थायामस्मत्सौदामिनीसमक्षं तयो. प्रवृत्तेय प्रतिज्ञावाम्यामपत्यसबन्ध. कर्तव्य इति। प्रधानप्रकृतिकोपस्त्वेव परिहृतः।

मालती—अहो सवरणम्। (अहो संवरणम्)

मकरन्दमाधवौ—(साश्चर्यम्) जयन्ति खलु महतां। विसवादिन्यः प्रत्यायिन्यः कल्याणा नीतय।

कामन्दकी—वत्स,

यत्प्रागेव मनोरथैर्वृतमभूत्कल्याणमायुष्मतो-<br>स्तत्पुण्यैर्मदुपक्रमैश्च फलितं क्लेशैश्च मच्छिष्ययोः।<br>निष्णातश्च समागमोऽपि विहितस्त्वत्प्रेयसः कान्तया<br>संप्रीतौ नृपनन्दनौ यदपरं प्रेयस्तदप्युच्यताम् ॥२४॥

---

कामन्दकी—(अपने आप) मदयन्तिका के साथ (मकरन्द के) विवाह-सबंध की बात हो जाने से इस समय हम लोग नन्दन की ओर से आने वाली आशका से निश्चिन्त है। (प्रकट रूप मे) वत्स माधव एव मकरन्द! इनकी बात कुछ दूसरे प्रकार की नही है और न घटना कुछ दूसरे प्रकार से घटित हुई है। छात्रावस्था में हमारे और सौदामिनी के सामने अमात्य भूरिवसु और देवरात ने यह प्रतिज्ञा की थी कि—हमारी सन्तानों का पारस्परिक सम्बन्ध होगा। इसलिए यह प्रकार (चोरी चोरी जो तुम लोगों का विवाह हुआ है वह) राजाके क्रोध को दूर करने के लिए था और वह दूर भी हो चुका।

मालती—कितनी आश्चर्यजनक गोपनीयता थी।

मकरन्द और माधव—(आश्चर्य के साथ) महान पुरुषो की वे नीतियाँ जयशील हो जो देखने में परस्पर विरोधी होते हुए भी विश्वासजनक तथा अन्त मे कल्याणकारिणी होती हैं।

कामन्दकी—वत्स! पहले की अभिलाषाओं से तुम दोनों चिरजीवियों (मालती और माधव) का जो विवाह-मगल आकाक्षित था वह तुम दोनों के पुण्यो से, मेरे प्रयत्नों से और मेरी शिष्याओं (सौदामिनी और अवलोकिता) के कष्ट-सहन से सम्पन्न हुआ। तुम्हारे सुहृद मकरन्द का भी उनकी प्रियतमा (मदयन्तिका) के साथ कौशलपूर्ण वैवाहिक सम्बन्ध भी सम्पन्न हो गया। राजा और नन्दन भी प्रसन्न हो गए हैं। अतः यदि कोई दूसरा प्रिय विषय हो तो उसे भी बताओ ॥२४॥

माधवः—(सहर्षम्) अतः परं मम प्रियमस्ति ? तथापीदमस्तु भरत-वाक्यम्—

शिवमस्तु सर्वजगतां परहितनिरता भवन्तु भूतगणाः।
दोषाः प्रयान्तु शान्तिं, सर्वत्र सुखी भवतु लोकः ॥२५॥

कामन्दकी—एवमस्तु।

(इति निष्क्रान्ताः सर्वे)

इति महाकविश्रीभवभूतिविरचिते मालतीमाधवे दशमोऽङ्कः।

---

माधव—(सहर्ष) इससे बढ़ कर भी क्या कोई मेरा प्रिय विषय है ? फिर भी यह भरत वाक्य पूरा हो—

सभी लोकों का कल्याण हो, जगत् के प्राणि-वृन्द एक दूसरे के कल्याण में प्रवृत्त हों। दोष शान्त हों और लोग सर्वत्र सुखी हों ॥२५॥

कामन्दकी—ऐसा ही हो।

(ऐसा कहने के बाद सभी लोग जाते हैं।)

महाकवि श्री भवभूतिरचित मालतीमाधव नाटक में सम्मेलन नामक दसवाँ अंक समाप्त।